॥ श्रीः ॥

श्रीमत्कविशिरोमणिकालिदासप्रणीतम्

# मेघदूतकाव्यम् ।

मल्लिनाथकृत संजीविनीटीकया

ज्ञानदीपिकाख्यया भाषाटीकया च समेतम् ।

इदम्

मिश्रकुलाग्रगण्य सुखानंदसुतबलदेवशर्मणा

अन्वयेन, अन्वयार्थेन, भावार्थेन च

विशदीकृतं,

---

तच्च

श्रीयुत भगीरथात्मजेन हरिप्रसादशर्मणा

मुंबय्यां

"गणपत कृष्णाजी" मुद्रणालयेऽङ्कयित्वा प्रकाशितम् ।

शकाब्दाः १८१६, संवत् १९५१.

---

# विज्ञप्ति.

सब जगत्में लोकोपकारक ऐसे महात्माओंने क्रिरोडिन ग्रंथ रचे हैं. तिनमें कितनेक प्रसिद्ध हो रहे हैं तथापि पढनेवाले बालकोंकूं व्युत्पत्तिके अर्थ काव्य ग्रंथही श्रेष्ठ हैं. पंडितोंने कहा है कि,

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**
**सद्यः परनिर्वृतये कांतासंमिततयोपदेशयुजे ॥**

कैसा है काव्य ? की यशसे ( कीर्तिअर्थ ), और अर्थकृते ( द्रव्यार्जनमें सहकारी ), तथा व्यहारविदे ( लोकव्यवहार ज्ञानदाता ), और शिवतरक्षतये ( कल्याणसे इतर अर्थात् अकल्याण तिसके नाशार्थ ), और सद्यः परनिर्वृतये (तत्काल काव्यसारार्थज्ञानसे तत्त्वज्ञान बढावनेवाला), और कांतासंमिततयो-पदेशयुजे ( अपनी अनुरागवाली स्त्रीके समान हितोपदेश करनेवाला ) इत्यादि अनेक गुण केवल काव्यमेंही रहते हैं. इसवास्ते काव्यहीका पढना श्रेष्ठ है ऐसा सिद्ध हुआ.

आजतक काव्यकार प्रसिद्ध कविभी अनेक प्रसिद्ध हो गए, परंतु तिनमें 'कालिदास पंडितसरिखा अद्वितीय पंडित दूसरा नहीं,' ऐसा बडेबडे विद्वान् लोगोंके समुदायमें वारवार कहाजाता है. सब विद्वानोंमें अग्रपूजाके वखूत पंडित कालिदासकाही श्रेष्ठत्व निश्चित ठहरताहै. इसमें मतलब क्या है की, यह केवल अपने बुद्धिबलसेही श्रेठत्वको पहुंचा नहीं, किंतु वहुत दिनतक तपश्चर्याकरके आदिशक्ति अघटितघटनासामर्थ्यवाली **कालीजी**का आरा-धन कर वह देवी सुप्रसन्न किईथी. और उस देवीके प्रसादसेही कालिदासके मुखमें साक्षात् **सरस्वती**जी बैठीथीं, वास्ते दोनोंके अनुग्रहबलसे पंडितनें जोजो कहा वह शब्दसमुदाय निर्दोष, रसभरित, अलंकार प्रास छंद इत्यादि साहित्यविशिष्ट मधुर काव्यही होरहा.

पंडितराजनें बहुत **रघुवंश**आदि महाकाव्य और खंड काव्यभी अनेक

मेघदूतका उपक्रमपद्य—

इति विरचितमेतत्काव्यमावेष्ट्य मेघं
बहुगुणमपदोषं कालिदासस्य काव्यम् ।
मलिनितपरकाव्यं तिष्ठतादाशशाङ्कं
भुवनमवतु देवः सर्वदा मोघवर्षः ॥
श्रीवीरसेनमुनिपादपयोजभृङ्गः
श्रीमानभूद्विनयसेनमुनिर्गरीयान् ।
तच्चोदितेन जिनसेनमुनीश्वरेण
काव्यं व्यधायि परिवेष्टितमेघदूतम् ॥

इस ग्रंथके छापनेके समय ऐसी व्यवस्था रखखी है कि, ऊपर मूलश्लोक, नीचे संस्कृतमें अन्वय, पीछे मल्लिनाथकृतटीका, और पीछे अन्वयक्रमसें श्लोकार्थ और उनके नीचे भावार्थ ( तात्पर्यार्थ ) ऐसा अनुक्रम रखखा है. इस क्रमसे पढनेवालेकूं तथा प्रेमी रसिक लोगोंकूंभी अनायासही अर्थ ध्यानमें आजाय इसमें संशय नहीं.

अब ऊपर लिखी व्यवस्थामुजब यह पुस्तक बडे प्रयत्नसे पंडितद्वारा तय्यार करके छपादिया है. विशेष क्या कहना, इसकी सुलभता, व्यवस्था और रसमाधुर्यादि गुण एक बखत पुस्तक संग्रह करके आरंभसे अंततक वांचनेसेही मालूम पडेगी. इसको आश्रय देकर मेरे परिश्रम सफल करना ऐसी गुणज्ञ रसिकजनोंके आगे विनयपूर्वक प्रार्थना है.

हरिप्रसाद भगीरथजी,
कालकादेवीरोड, रामवाडी, मुंबई.

श्रीः ।

# अथ मेघदूतकाव्यम् ।

## भाषाटीकासमेतम् ।

### पूर्वमेघः ।

मातापितृभ्यां जगतो नमो वामार्धजानये ।
सद्यो दक्षिणदृक्पातसंकुचद्वामदृष्टये ॥ १ ॥

अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥ २ ॥

शरणं करवाणि कामदं ते चरणं वाणि चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब कृतार्थसार्थवाहम् ॥३॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते ॥ ४ ॥

"आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इति शास्त्रात्काव्यादौ वस्तुनिर्देशात्कथां प्रस्तौति—

कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ १

अन्वयः—स्वाधिकारात् प्रमत्तः [ अत एव ] कान्ताविरहगुरुणा वर्षभोग्येण भर्तुः शापेन अस्तङ्गमितमहिमा कश्चित् यक्षः जनकतनयास्नानपुण्योदकेषु स्निग्धच्छायातरुषु रामगिर्याश्रमेषु वसतिं चक्रे ॥ १ ॥

कश्चिदिति ॥ स्वाधिकारात्स्वनियोगात्प्रमत्तोऽनवहितः ॥ "प्रमादोऽनवधानता" इत्यमरः । "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्"

इत्यपादानत्वम्। तस्मात्पञ्चमी ॥ अत एवापराधाद्धेतोः । कान्ताविरहेण गुरुणा दुर्भरेण । दुस्तरेणेत्यर्थः ॥ "गुरुस्तु गीष्पतौ श्रेष्ठ गुरौ पितरि दुर्भरे" इति शब्दार्णवे ॥ वर्षभोग्येण संवत्सरभोग्येण ॥ " कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । "अत्यन्तसंयोगे च" इति समासः । "कुमति च" इति णत्वम् । भर्तुः स्वामिनः शापेन । अस्तंगमितो महिमा सामर्थ्यं यस्य सोऽस्तंगमितमहिमा ॥ अस्तमिति मकारान्तमव्ययम् । तस्य "द्वितीया–" इति योगविभागात्समासः ॥ कश्चिदनिर्दिष्टनामा यक्षो देवयोनिविशेषः ॥ "विद्याधराप्सरोयक्षरक्षोगन्धर्वकिंनराः । पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" इत्यमरः ॥ जनकतनयायाः सीतायाः स्नानैरवगाहनैः पुण्यानि पवित्राण्युदकानि येषु तेषु। पावनेष्वित्यर्थः ॥ छायाप्रधानास्तरवश्छायातरवः ॥ शाकपार्थिवादित्वात्समासः ॥ स्निग्धाः सान्द्राश्छायातरवो नमेरुवृक्षा येषु तेषु। वसतियोग्येष्वित्यर्थः ॥ "स्निग्धं तु मसृणे सान्द्रे" इति । "छायावृक्षो नमेरुः स्यात्" इति च शब्दार्णवे ॥ रामगिरेश्चित्रकूटस्याश्रमेषु वसतिम् ॥ "वहिवस्यर्तिभ्यश्च" इत्यौणादिकोऽतिमत्ययः ॥ चक्रे कृतवान् ॥ अत्र रसो विप्रलम्भाख्यः शृङ्गारः । तत्राप्युन्मादावस्था । अत एवैकत्रानवस्थानं सूचितमाश्रमेष्विति बहुवचनेन ॥ सीतां प्रति रामस्य हनुमत्संदेशं मनसि निधाय मेघसंदेशं कविः कृतवानित्याहुः ॥ अत्र काव्ये सर्वत्र मन्दाक्रान्तावृत्तम् । तल्लक्षणं—"मन्दाक्रान्ता जलधिषडगैम्भौं नतौ ताद्गुरू चेत्" इति ॥

**अन्वयार्थः**–अपने अधिकारसे प्रमत्त होनेके कारण, कठिन स्त्रीवियोगके वर्षपर्यन्त भोगनेयोग्य स्वामी ( कुबेर ) के शापसे महिमाहीन कोई यक्ष जानकीके स्नानसे पुण्यजलयुक्त सघन छायाके वृक्षोंवाले, रामके पर्वत( चित्रकूट )के आश्रमोंमें निवास करने लगा ॥१॥

**भावार्थः**–कोई यक्ष स्त्रीके विरहसे, कठिन भोग्य यक्षराज (कुबे-

---

१ "कोई यक्ष" इतनाही क्यों लिखा, उसके नामको क्यों नहीं प्रकट किया ? । इसपर प्रमाण;

**श्लो०** "मित्रद्रोहं प्रकुर्वन्ति ये च विश्वासघातकाः ।
तेषां नाम न कुर्वन्ति पद्यादौ च विशेषतः ।"

रजी )के शापसे, अपने अधिकारसे रहित और प्रभावहीन हो, चित्रकूट पर्वतके एक आश्रममें वास करने लगा। इस स्थानमें निरन्तरभावसे लगे छायाप्रधान देवदारुके वृक्षगण शोभाविस्तार करते हैं। और पूर्वकालमें जनकनन्दिनी ( सीता ) जीके स्नानकरनेके कारण इस स्थानका सब जल अति पवित्र है ॥ १ ॥

**तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तस्स कामी**
**नीत्वा मासान्कनकवलयभ्रंशरिक्तप्रकोष्ठः ।**
**आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं**
**वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥ २ ॥**

**अन्वयः**—तस्मिन् अद्रौ अबलाविप्रयुक्तः कनकवलयभ्रंशरिक्तप्रकोष्ठः कामी सः कतिचित् मासान् नीत्वा आषाढस्य प्रथमदिवसे आश्लिष्टसानुम् वप्रक्रीडापरिणतगजप्रेक्षणीयम् मेघम् ददर्श ॥ २ ॥

**तस्मिन्निति** ॥ तस्मिन्नद्रौ चित्रकूटाद्रौ । अबलाविप्रयुक्तः कान्ताविरही । कनकस्य वलयः कटकम् ॥ "कटकं वलयोऽस्त्रियाम्" इत्यमरः ॥ तस्य भ्रंशेन पातेन रिक्तः शून्यः प्रकोष्ठः कूर्परादधःप्रदेशो यस्य स तथोक्तः ॥ "कक्षान्तरे प्रकोष्ठः स्यात्प्रकोष्ठः कूर्परादधः" इति शाश्वतः ॥ विरहदुःखात्कृश इत्यर्थः । कामी कामुकः स यक्षः । कतिचिन्मासान् । अष्टौ मासानित्यर्थः । "शेषान्मासान्गमय चतुरः" इति वक्ष्यमाणत्वात् ॥ नीत्वा यापयित्वा । अपाढानक्षत्रेण युक्ता पौर्णमास्याषाढी ॥ "नक्षत्रेण युक्तः कालः" इत्यण् । "टिड्ढाणञ्-" इत्यादिना ङीप् ॥ साषाढ्यस्मिन्पौर्णमासीत्याषाढो मासः ॥ "सास्मिन्पौर्णमा-

१ मल्लिनाथने चित्रकूटकोही रामगिरि माना है. "रामगिरेश्चित्रकूटस्य आश्रमेषु" इत्यादि । प्रोफेसर विलसनसाहब इङ्गलेण्डके विख्यात संस्कृतज्ञ इसको कामदानाथ जो चित्रकूटके पास है बतलाते हैं। सन १८०५ ई. का एशियाटिक रजिस्टरनामक वार्षिक पत्र रामगिरिसे रामटेककोही लेताहै, फ्रनूसिस् जानसन इससमयके यूरोपीयप्रधान संस्कृताध्यापक अपनी टीकामेंभी लिखते हैं कि-"चित्रकूटस्यानातिनिकटो दक्षिणस्यां दिशि रघुनाथेनोपलक्षितो गिरिः पर्वत इति ॥"

सीति संज्ञायाम्" इत्यण् ॥ तस्य प्रथमदिवस आश्लिष्टसानुमाक्रान्तकूटम् । वप्रक्रीडा उत्खातकेलयः ॥ "उत्खातकेलिः क्रीडायैर्वप्रक्रीडा निगद्यते" इति शब्दार्णवे ॥ तासु परिणतस्तिर्यग्दन्तप्रहारः ॥ "तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः" इति हलायुधः ॥ स चासौ गजश्च तमिव प्रेक्षणीयं दर्शनीयं मेघं ददर्श ॥ गजप्रेक्षणीयमित्यत्रेवलोपाल्लुप्तोपमा ॥ केचित् "आषाढस्य प्रथमदिवसे" इत्यत्र "प्रत्यासन्ने नभसि" इति वक्ष्यमाणनभोमासस्य प्रत्यासत्त्यर्थं "दशमदिवसे" इति पाठं कल्पयन्ति तदसंगतम् । प्रथमातिरेके कारणाभावान्नभोमासस्य प्रत्यासत्त्यर्थमित्युक्तमिति चेन्न । प्रत्यासत्तिमात्रस्य मासप्रत्यासत्त्यैव प्रथमदिवसस्याप्युपपत्तेः । अत्यन्तप्रत्यासत्तेरुपयोगाभावेनाविवक्षितत्वात् । विवक्षितत्वे वा स्वपक्षेऽपि प्रथमदिवसातिक्रमेण मेघदर्शनकल्पनायां प्रमाणाभावेन तदसंभवात् । प्रत्युतास्मत्पक्ष एव कुशलसंदेशस्य भाव्यनर्थप्रतीकारार्थस्य पुरत एवानुमानमुक्तं भवतीत्युपयोगसिद्धिः ॥ ननून्मत्तस्य नायं विवेक इति चेन्न । उन्मत्तस्य नानर्थस्य प्रतीकारार्थं प्रवृत्तिरपीति संदेश एव मा भूत् ॥ तथा च काव्यारम्भ एवाप्रसिद्धः स्यादित्यहो मूलच्छेदी पाण्डित्यप्रकर्षः । कथं तर्हि "शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ" इत्यादिना भगवत्प्रबोधावधिकस्य शापस्य मासचतुष्टयावशिष्टस्योक्तिः । दशदिवसाधिक्यादिति चेत्स्वपक्षेऽपि कथं सा, विंशतिदिवसैर्न्यूनत्वादिति संतोष्टव्यम् । तस्मादीषद्वैषम्यमविवक्षितमिति सुष्ठूक्तं "प्रथमदिवसे" इति ॥

**अन्वयार्थः**—तिस पर्वतमें अबलाका वियोगी, सुवर्णके कंगण गिरनेके कारण रीती कलाईवाला वह कामी कुछेक महीनोंको बिताकर, आषाढके प्रथमदिवसमें पर्वतके शिखर छूनेवाला, उत्खातलीलामें लगा, तिर्यग्दन्तप्रहारी[1], हाथीकी समान दर्शनीय, मेघको देखता हुआ ॥ २ ॥

**भावार्थः**—स्त्रीके विरहसें अत्यन्त कातर होने और दुबला होनेके कारण सुवर्णकंगण गिरनेसे रीतेहाथवाला, मदनके वश पड़ा वह यक्ष उस पर्वतपर कई मास बिताय आषाढ़मासके पहले दिन ( पड़वाको )

---

[1] "तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः ।" इति हलायुधः । तिरछे दांत टेककर परकोटेपर टक्कर मारनेवाले हाथीको परिणतगज कहते हैं ।

देखता हुआ कि उत्खातक्रीड़ाकरनेमें प्रवृत्त तिरछे दाँतोंका प्रहार करनेवाले महामातंगकी समान अपूर्वदर्शन नवीन नीरद उदय होकर, पर्वतके शिखरको भेट रहा है ॥ २ ॥

**तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो-**
**रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।**
**मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः**
**कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ ३ ॥**

**अन्वयः—राजराजस्य अनुचरः अन्तर्बाष्पः कौतुकाधानहेतोः तस्य पुरः कथमपि स्थित्वा चिरम् दध्यौ । [तथाहि] मेघालोके सति सुखिनः अपि चेतः अन्यथावृत्ति भवति कण्ठाश्लेषप्रणयिनि जने दूरसंस्थे सति किम् पुनः ॥ ३ ॥**

**तस्येति** ॥ राजानो यक्षाः ॥ "राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रिय-शक्रयोः" इति विश्वः ॥ राज्ञां राजा राजराजः कुबेरः ॥ "राजराजो धनाधिपः" इत्यमरः । "राजाहःसखिभ्यष्टच्" इति टच्प्रत्ययः ॥ तस्यानुचरो यक्षः । अन्तर्बाष्पो धीरोदात्तत्वादन्तःस्तम्भिताश्रुः सन् । कौतुकाधानहेतोरभिलाषोत्पादकारणस्य ॥ "कौतुकं चाभिलाषे स्या-दुत्सवे नर्महर्षयोः" इति विश्वः ॥ तस्य मेघस्य पुरोऽग्रे कथमपि । गरीयसा प्रयत्नेनेत्यर्थः ॥ "ज्ञानहेतुविवक्षायामप्यादि कथमव्ययम् । कथमादि तथाप्यन्तं यत्नगौरवबाढयोः" इत्युज्ज्वलः ॥ स्थित्वा चिरं दध्यौ चिन्तयामास ॥ "ध्यै चिन्तायाम्" इति धातोर्लिट् ॥ मनो-विकारोपशमनपर्यन्तमिति शेषः ॥ विकारहेतुमाह—मेघालोक इति ॥ मेघालोके मेघदर्शने सति सुखिनोऽपि प्रियादिजनसंगतस्यापि चेतश्चि-त्तमन्यथाभूता वृत्तिर्व्यापारो यस्य तदन्यथावृत्ति भवति । विकृतिमा-पद्यत इत्यर्थः । कण्ठाश्लेषप्रणयिनि कण्ठालिङ्गनार्थिनि जने । दूरे संस्था स्थितिर्यस्य तस्मिन्दूरसंस्थे सति किं पुनः । विरहिणः किमुत वक्तव्यमित्यर्थः । विरहिणां मेघसंदर्शनमुद्दीपनं भवतीति भावः ॥ अ-र्थान्तरन्यासोऽलंकारः । तदुक्तं दण्डिना—"ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किंचन । तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः॥" इति ॥ ३ ॥

**अन्वयार्थः**—कुबेरका सेवक, भीतरही आंसुओंको रोकें, अभि-

आप उन्मत्त जागनेके कारण उस ( मेघ ) के आगे किसी प्रकार स्थित होकर, बहुतकालतक ध्यान करता रहा; कारण कि, मेघके देखनेपर सुखी पुरुषोंकाभी चित्त औरप्रकारका होजाता है; फिर कंठालिंगनकी प्रार्थना करनेवाले जन दूर होनेपर फिर तो क्या ( कहें ) ॥ ३ ॥

भावार्थः—कुबेरका सेवक बाष्पकंठ यक्ष, अभिलाषित इच्छाके पूरण करनेवाले, उस मेघके सन्मुख अतियत्नसहित खड़ेहो बहुत ( देरतक जबतक उसके मनका विकार शान्त हुआ ) एकमनसे विचार करने लगा। नये मेघके देखनेसे सुखसम्भोगमें आसक्त पुरुषकाभी अन्तःकरण चंचल होता है; फिर जब गलेभेटकर मिलनेकी इच्छा करनेवाले पुरुषके मनकी प्रेमपात्र प्रियजन ( प्यारी स्त्री )के दूर रहनेसे कैसी दशा होती है! वह क्या कहें ॥ ३ ॥

अथ समाहितान्तःकरणः सकिं कृतवानित्यत आह—

**प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी**
**जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम् ।**
**स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै**
**प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥ ४ ॥**

**अन्वयः**—सः नभसि प्रत्यासन्ने दयिताजीवितालम्बनार्थी जीमूतेन स्वकुशलमयीम् प्रवृत्तिम् हारयिष्यन् प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै प्रीतिप्रमुखवचनम् स्वागतम् प्रीतः व्याजहार ॥ ४ ॥

**प्रत्यासन्न** इति ॥ स यक्षः। यश्चिरं दध्यौ स इत्यर्थः। नभसि श्रावणे ॥ "नभः खं श्रावणो नभाः" इत्यमरः ॥ प्रत्यासन्न आषाढस्यानन्तरं संनिकृष्टे । प्राप्ते सतीत्यर्थः। दयिताजीवितालम्बनार्थी सन् । वर्षाकालस्य विरहदुःखजनकत्वात् "उत्पन्नानर्थप्रतीकारादनर्थोत्पत्तिप्रतिबन्ध एव वरम्" इति न्यायेन प्रागेव प्रियाप्राणधारणोपायं चिकीर्षुरित्यर्थः। जीवनस्योदकस्य मूतः पटबन्धो वस्त्रबन्धो जीमूतः ॥ पृषोदरादित्वात्साधुः । "मूतः स्यात्पटबन्धेऽपि" इति रुद्रः ॥ तेन जीमूतेन जलधरेण प्रयोज्येन स्वकुशलमयीं स्वक्षेमप्रधानां प्रवृत्तिं वार्ताम् ॥ " वार्ता प्रवृत्तिर्वृत्तान्तः" इत्यमरः ॥ हारयिष्यन्प्रापयिष्यन् ॥

"लट् शेषे च" इति चकारात्क्रियोपपदाल्लृट्प्रत्ययः । जीवनार्थं कर्म जीवनमदेनैव कर्तव्यमिति भावः ॥ "हृक्रोरन्यतरस्याम्" इति कर्मसंज्ञाया विकल्पात् पक्षे कर्तरि तृतीया ॥ प्रत्ययैरभिनवैः कुटज-कुसुमैर्गिरिमल्लिकाभिः ॥ "कुटजो गिरिमल्लिका" इति हलायुधः ॥ कल्पितार्घाय कल्पितोऽनुष्ठितोऽर्घः पूजाविधिर्यस्मै ॥ "मूल्ये पूजा-विधावर्घः" इत्यमरः ॥ तस्मै जीमूताय ॥ "क्रियाग्रहणमपि कर्तव्यम्" इति संप्रदानत्वाच्चतुर्थी ॥ प्रीतिप्रमुखानि प्रीतिपूर्वकाणि वचनानि यस्मि-न्कर्मणि तत्प्रीतिप्रमुखवचनं यथा तथा । शोभनमागतं स्वागतं स्वाग-तवचनं प्रीतः सन्व्याजहार । कुशलागमनं पप्रच्छेत्यर्थः ॥ नाथेन त्व-त्र "प्रत्यासन्ने मनसि" इति साधीयान्पाठः कल्पितः । प्रत्यासन्ने प्रकृ-तिमापन्ने सतीत्यर्थः । यस्तु तेनैव पूर्वपाठविरोधः प्रदर्शितः सोऽस्मा-भिः"आषाढस्य प्रथमदिवसे" इत्येतत्पाठविकल्पसमाधानेनैव समाधाय परिहृतः ॥ ४ ॥

**अन्वयार्थः**—वह यक्ष श्रावणके निकट होनेपर प्रियके प्राणधारणका इच्छक होता मेघद्वारा अपनी कुशलमयी वार्ता भिजवानेको, पर्वतकी चमेलीके फूलोंसे अर्घकी कल्पना कर उस मेघके निमित्त प्रीतियुक्त स्वागतके वचनोंको प्रसन्न होकर, बोला ॥ ४ ॥

**भावार्थः**—इसके उपरान्त स्त्रीके विरहसे व्याकुल वह यक्ष आ-षाढ़ महीनेके अन्त होजानेपर सावनके महीनेको निकट आया देख, किस भांतीसे विरहीजनके नसहनेयोग्य दारुण वर्षासमयमें, विरहसे कातर हुई प्यारीके जीवकी रक्षा हो इस विषयमें चिन्ताकर इस नये उदय हुये बादलके द्वारा, प्यारीके पास अपनी कुशलका संवाद भेज, धीरज दिलानेका अभिलाषी हुआ । फिर उसने प्रीतिपूर्णहृद-यसे पहाड़ी चमेलीके नये फूलोंका अर्घ स्थापित कर, प्रीतिभरे वच-नोंके द्वारा मेघसे पूंछा ॥ ४ ॥

ननु चेतनासाध्यमर्थं कथमचेतनेन कारयितुं प्रवृत्त इत्यपेक्षायां कविः समाधत्ते—

**धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघः**
**संदेशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।**
**इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे**
**कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥ ५ ॥**

अन्वयः—धूमज्योतिःसलिलमरुताम् सन्निपातः मेघः क, पटुकरणैः प्राणिभिः प्रापणीयाः सन्देशार्थाः क इति औत्सुक्यात् अपरिगणयन् गुह्यकः तम् ययाचे [ तथाहि ] कामार्ताः चेतनाचेतनेषु प्रकृतिकृपणाः [ भवन्ति ] ॥ ५ ॥

धूमेति॥ धूमश्च ज्योतिश्च सलिलं च मरुच्च तेषां संनिपातः संघातो मेघः क । अचेतनत्वात्संदेशानर्ह इत्यर्थः । पटुकरणैः समर्थेन्द्रियैः ॥ "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः ॥ प्राणिभिश्चेतनैः ॥ "प्राणी तु चेतनो जन्मी" इत्यमरः ॥ प्रापणीयाः प्रापयितव्याः । संदिश्यन्त इति संदेशास्त एवार्थाः क । इत्येवमौत्सुक्यादिष्टार्थोद्युक्तत्वात् ॥ "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः ॥ संप्रदानत्वात्कुतश्चनाभिमुखीचकारेत्यर्थः । अपरिगणयन्नविचारयन्गुह्यको यक्षस्तं मेघं ययाचे याचितवान् ॥ "याचृ याच्ञायाम्" ॥ तथाहि । कामार्ता मदनातुराश्चेतनाश्चाचेतनाश्च तेषु विषये प्रकृतिकृपणाः स्वभावदीनाः । कामान्धानां युक्तायुक्तविवेकशून्यत्वादचेतनयाच्ञा न विरुध्यत इत्यर्थः ॥ अत्र मेघसंदेशयोर्विरूपयोर्घटनाद्विषमालंकारः । तदुक्तम्—"विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत् । विरूपघटना चासौ विषमालंकृतिस्त्रिधा ॥" इति । सा चार्थान्तरन्यासानुप्राणिता तत्समर्थकत्वेनैव चतुर्थपादे तस्योपन्यासात् ॥

**अन्वयार्थः**–धूम, अग्नि, जल, पवनका संयोग रूप मेघ कहां? और समर्थ इन्द्रियवाले प्राणियोंद्वारा लेजाने योग्य संदेश कहां? इसकोभी उत्कंठासे न गिणकर, यक्ष उसकी याचना भया, कारण कि–कामार्त ( पुरुष ) चेतन अचेतनमें स्वाभाविक दीन ( होते ) हैं ॥ ५ ॥

**भावार्थः**–कहां धूम, तेज, पानी और बयारके समुदायसें बनाहुआ मेघ? कहां अधिक चतुर वचन, हाथ, पैर इत्यादि इन्द्रियों करि युक्त प्राणियोंके द्वारा भेजनें लायक समाचार? इन दोनोंका समावेश कभी नहीं होसकता। उत्कंठाके मारे यक्षनें अपने मनमें इसका कुछ विचार न किया। और मेघसे प्रार्थना की कि- तुम हमारे दूत बनो। यक्षकी ऐसी प्रार्थना कुछ असंगत नहीं, कारण कि जो पुरुष कामदेवसे अन्धे होरहे हे, उनको स्वभावसेंहीं कार्य अकार्यका विचार नहीं रहता, वे चेतन, अचेतन सबकेहो निकट कातरता प्रकाश करते

है ॥ ५ ॥ (किसी यूरोपियन महाशयकी यह उक्ति बहुत ठीक है कि-
" Love is blind "

संप्रति याञ्चाप्रकारमाह—

जातं वंशे भुवनविदिते पुष्करावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः।
तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं
याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा॥ ६ ॥

**अन्वयः**—[ हे मेघ ] त्वाम् भुवनविदिते पुष्करावर्तकानाम् वंशे जातम् कामरूपम् मघोनः प्रकृतिपुरुषम् जानामि, तेन विधिवशात् दूरबन्धुः अहम् त्वयि अर्थित्वम् गतः अस्मि [ तथाहि ] अधिगुणे याञ्चा मोघा [ अपि ] वरम्, अधमे लब्धकामा [ वरम् अपि ] न [ भवति ] ॥ ६ ॥

**जातमिति** ॥ हे मेघ। त्वां भुवनेषु विदिते भुवनविदिते ॥ "निष्ठा' इति भूतार्थे क्तः। "मतिबुद्धि-" इत्यादिना वर्तमानार्थत्वेऽपि "क्तस्य च वर्तमाने" इति भुवनशब्दस्य षष्ठयन्तता नियमात्समासो न स्यात्। "क्तेन च पूजायाम्" इति निषेधात् ॥ पुष्कराश्चावर्तकाश्च केचिन्मेघानां श्रेष्ठास्तेषां वंशे जातम्। महाकुलप्रसूतमित्यर्थः। कामरूपमिच्छाधीनविग्रहम्। दुर्गादिसंचारक्षममित्यर्थः। मघोन इन्द्रस्य प्रकृतिपुरुषं प्रधानपुरुषं जानामि। तेन महाकुलप्रसूतत्वादिगुणयोगित्वेन हेतुना विधिवशाद्दैवायत्तत्वात् ॥ "विधिर्विधाने दैवे च" इत्यमरः ॥ वशमायत्ते "वशमिच्छाप्रभुत्वयोः" इति विश्वः ॥ दूरे बन्धुर्य-

१ पुष्करं आवर्तयन्ति ते पुष्करावर्तकाः। पुष्करं कहिये उदक उसके प्रति आवर्तयन्ति कहिये फिरालेते हैं वे पुष्करावर्तक। इस पदकी ऐसी व्याख्या यहां परती है। और, पुष्करावर्तका नाम ये मेघाः पक्षसम्भवाः। संयोगाद्वायुनोच्छिन्नाः पर्वतानां महौजसाम् पुष्करा नाम ते मेघा बृहतस्तोयमत्सराः। पुष्करावर्तकास्तेन कारणेनेह शब्दिताः ॥ ऐसा विष्णुपुराणमें कहा है। उससे मालुम हुआ कि-पुष्करावर्त एक नाम है। लेकिन मल्लिनाथसूरि 'पुष्कराश्च आवर्तकाश्च' इस प्रकार कहते हैं। इससे जाना गया कि पुष्कर व आवर्तक यह दो गण मेघोंके हैं।

स्य दूरबन्धुर्वियुक्तभार्योऽहं त्वय्यर्थित्वं गतः ॥ ननु याचकस्य याच्ञायां याच्यगुणोत्कर्षः कुत्रोपयुज्यत इत्याशङ्क्य दैवाद्याच्ञाभङ्गेऽपि लाघवदोषाभाव एवोपयोग इत्याह—याच्ञेति ॥ तथाहि । अधिगुणेऽधिकगुणे पुंसि विषये याच्ञा मोघा निष्फलापि वरमीषत्प्रियम् । दातुर्गुणाढ्यत्वात्प्रियत्वं याच्ञावैफल्यादीषत्प्रियत्वमिति भावः । अधमे निर्गुणे याच्ञा लब्धकामापि सफलापि न वरम् । ईषत्प्रियमपि न भवतीत्यर्थः ॥ "दैवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये" इत्यमरः ॥ अर्थान्तरन्यासानुप्राणितः प्रेयोऽलङ्कारः । तदुक्तं दण्डिना—"प्रेयः प्रियतराख्यानम्" इति ॥ एतदाद्ये पादत्रये चतुर्थपादस्थेनार्थान्तरन्यासेनोपजीवितमिति सुव्यक्तमेतत् ॥

**अन्वयार्थः**—हे मेघ [ मैं ] तुमको जगत्विख्यात पुष्करावर्तक मेघोंके वंशमें उत्पन्न हुआ कामरूपी इन्द्रका प्रधान पुरुष जानताहूं। प्रारब्धसे दूरबंधुवाला मैं तुममें अर्थिपनको प्राप्त हुआ हूं। कारण कि– गुणवानमें यांचाकी प्राप्ति नहोनीभी श्रेष्ठ है, निर्गुणमें सफल यांचाभी श्रेष्ठ नहीं ॥ ६ ॥

**भावार्थः**—हे वारिद ! तुमनें पुष्कर और आवर्त्तक इत्यादि महामेघोंके भुवनविख्यात बड़े कुलमें जन्म लिया है; मैं जानताहूं कि-तुम कोई साधारण नहीं हो, विशेष करके इच्छानुसार रूप धारण करनेंवाले और देवराज इन्द्रके श्रेष्ठ दूत हो; अर्थात् तुम कुलीन और बड़े हो। अत एव मैं प्यारीसें अलगहूं, तुमसे प्रार्थना करताहूं, कारण अधिकगुणसम्पन्न महावंशमें उत्पन्न हुये महात्माके निकट याचना विफल हो जाय तोभी अच्छा, परन्तु नीचके निकट याचना करके पूर्णमनोरथ होनाभी भला नहीं ॥ ६ ॥

**संतप्तानां त्वमसि शरणं तत्पयोद प्रियायाः**
**संदेशं मे हर धनपतिक्रोधविश्लेषितस्य ।**
**गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां**
**बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या** ॥ ७ ॥

**अन्वयः**—हे पयोद! त्वम् संतप्तानाम् शरणम् असि [तत्]

**धनपतिक्रोधविश्लेषितस्य मे संदेशम् प्रियायाः हर। बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या अलका नाम यक्षेश्वराणाम् वसतिः ते गन्तव्या [अस्ति] ॥ ७ ॥**

**संतप्तानामिति** ॥ हे पयोद! त्वं संतप्तानामातपेन वा प्रवासविरहेण वा संज्वरितानाम् ॥ "संतापः संज्वरः समौ" इत्यमरः ॥ शरणं पयोदानेनातपखिन्नानां प्रोषितानां स्वस्थानप्रेरणया च रक्षकोऽसि ॥ "शरणं गृहरक्षित्रोः" इत्यमरः ॥ तत्तस्मात्कारणाद्धनपतेः कुबेरस्य क्रोधेन विश्लेषितस्य प्रियया वियोजितस्य मे मम संदेशं वार्तां प्रियाया हर। प्रियां प्रति नयेत्यर्थः ॥ संबन्धसामान्ये षष्ठी ॥ संदेशहरणेनावयोः संतापं नुदेत्यर्थः ॥ कुत्र स्थाने सा स्थिता तत्स्थानस्य वा किं व्यावर्तकं तत्राह—गन्तव्येति ॥ बहिर्भवं बाह्यम् ॥ "बहिर्देवपञ्चजनेभ्यश्च" इति यञ् ॥ बाह्य उद्याने स्थितस्य हरस्य शिरसि या चन्द्रिका तया धौतानि निर्मलानि हर्म्याणि धनिकभवनानि यस्यां सा तथोक्ता "हर्म्यादि धनिनां वासः" इत्यमरः ॥ अनेन व्यावर्तकमुक्तम् ॥ अलका नामालकेति प्रसिद्धा यक्षेश्वराणां वसतिः स्थानं ते तव गन्तव्या। त्वया गन्तव्येत्यर्थः ॥ "कृत्यानां कर्तरि वा" इति षष्ठी ॥ ७ ॥

**अन्वयार्थः**-हे मेघ, तुम संतप्तोंको शरण देनेहारे हो; इस कारण कुबेरके क्रोधसें वियोग कराये मेरे संदेशेकों प्रियाके पास लेजाओ, बाहर बगीचेमें स्थित शंकरके शिरकी चंद्रचांदनीसें श्वेत महलवाली अलका नाम यक्षेश्वरोंकी पुरीमें तुम्हें जाना उचित है ॥ ७ ॥

**भावार्थः**-हे पयोद! इस संसारमें संतापित लोग तुम्हारीही शरण लेते हैं, एक तुम्हीं अकेले संतापित प्राणियोंको आश्रय देते हो। कुबेरको क्रोध आनेसें, अर्थात् उनके क्रोधकर शापदेनेसें मैं स्त्रीके विरहकी आगमें जलरहा हूं; इस कारण तुम मेरा कुशलसंवाद प्यारीको पहुंचाओ; अर्थात् संदेश पहुंचाय दोनोंका ताप दूर करो। (और जो तुम यह विचार करते हो कि-"इस कामकेलिये हमें कहां जाना होगा? और तेरी वह प्यारी कहां पर है? और उसके विशेष लक्षण क्या है?" तो सुनो) इस समय तुमको अलकानामक यक्षराजकी पुरीमें जाना होगा। वहां पर देखोगे कि- नगरके बाहरी बगीचेमें स्थित शंकरचूड़ामणि चन्द्रमाकी किरणोंसें तहांके रत्नखचित मन्दिर प्रकाशित हो रहे हैं ॥ ७ ॥

मद्दर्शं मार्गगतस्य तु पथिकाङ्गनाजनाश्वासनमानुषङ्गिकं फलमित्याह—

त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसन्त्यः ।
कः संनद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥८॥

अन्वयः—पवनपदवीम् आरूढम् त्वाम् पथिकवनिताः प्रत्ययात् आश्वसन्त्यः उद्गृहीतालकान्ताः प्रेक्षिष्यन्ते [तथाहि] त्वयि सन्नद्धे विरहविधुराम् जायाम् कः उपेक्षेत अन्यः अपि यः जनः अहम् इव पराधीनवृत्तिः न स्यात् ॥ ८ ॥

त्वामिति ॥ पवनपदवीमाकाशमारूढं त्वाम् । पन्थानं गच्छन्ति ते पथिकाः ॥ "पथः ष्कन्" इति ष्कन्प्रत्ययः ॥ तेषां वनिताः प्रोषितभर्तृकाः । प्रत्ययात्प्रियागमनविश्वासात ॥ "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः ॥ आश्वसन्त्यो विश्वसिताः ॥ श्वसिधातोः शत्रन्तात् "उगितश्च" इति ङीप् ॥ तथोद्गृहीतालकान्ता दृष्टिप्रसारार्थमुन्नमय्य धृतालकाग्राः सत्यः प्रेक्षिष्यन्ते । अत्युत्कण्ठतया द्रक्ष्यन्तीत्यर्थः ॥ मदागमनेन पथिकाः कथमागमिष्यन्तीत्यत्राह—तथाहि । त्वयि संनद्धे व्यापृते सति विरहेण विधुरां विवशां जायां क उपेक्षेत । न कोऽपीत्यर्थः । अन्योऽपि मद्व्यतिरिक्तोऽपि यो जनोऽहमिव पराधीनवृत्तिः परायत्तजीवनको न स्यात् । स्वतन्त्रस्तु न कोऽप्युपेक्षेतेति भावः ॥ अत्रार्थान्तरन्यासोऽलङ्कारः —"कार्यकारणसामान्यविशेषाणां परस्परम् । समर्थनं यत्र सोऽर्थान्तरन्यास उदाहृतः ॥" इति लक्षणात् ॥ ८ ॥

**अन्वयार्थः**-आकाशमें आरूढ हुए तुमको परदेश गये पतियोंकी स्त्रियें, प्रियोंके आनेके विश्वाससे विश्वासित हो बालोंकी लटें उठाकर, देखैंगी । तुम्हारे प्रादुर्भूत होनेपर विरहसे विवश स्त्रीकी कौन उपेक्षा करैगा जो कोई दूसरा पुरुष हमारी समान पराधीनवृत्तिवाला न होगा ॥ ८ ॥

**भावार्थः**-जब तुम वायुमार्गमें आरोहण करोगे, तब उस समय प्रवासी पुरुषोंकी स्त्रियें पतिके आगमनकी आशासे धीरज बांध, अपनी जुल्फोंको समार तुमको निहारकर देखेंगी । ( बादलोंको देख,

धीरज धरना इस लिये कहा कि-बादलोंके आनेसे वर्षा ऋतुको आया जान स्त्रियें समझैंगी कि- अब प्राणप्यारे घरको आवेंगे क्योंकि वर्षांतमें सब बटोही अपने २घर आजाते हैं ) जो पुरुष मेरी समान पराधीन न होकर, स्वेच्छानुसार कार्य करनेंकी सामर्थ्य रखताहो, ऐसा कौन पुरुष [ देव ] तुमको उदय हुआ [अपना ( मेघका) कार्य सिद्ध करनेको तैयार ] देख, विरहव्यथित स्त्रीकी उपेक्षा कर विदेशमें रह सकेगा ? ॥ ८ ॥

निमित्तान्यपि ते शुभानि दृश्यन्त इत्याह—

**मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां**
**वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।**
**गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः**
**सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ ९ ॥**

**अन्वयः—अनुकूलः पवनः त्वाम् मन्दं मन्दं यथा नुदति, च अयम् सगन्धः ते वामः चातकः मधुरं नदति च, गर्भाधानक्षणपरिचयात् खे आबद्धमालाः बलाकाः नयनसुभगम् भवन्तम् नूनं सेविष्यन्ते ॥ ९ ॥**

**मन्दं मन्दमिति** ॥ अनुकूलः पवनो वायुस्त्वां मन्दं मन्दम् । अतिमन्दमित्यर्थः ॥ अत्र कथंचिद्वीप्सायामेव द्विरुक्तिर्निर्वाह्या । "प्रकारे गुणवचनस्य" इत्येतदाश्रयणे तु कर्मधारयवद्भावे सुब्लुकि मन्दमन्दमिति स्यात् । तदेवाह वामनः—"मन्दं मन्दमित्यत्र प्रकारार्थे द्विर्भावः" इति ॥ यथा सदृशम् । भाविफलानुरूपमित्यर्थः ॥ "यथा सादृश्ययोग्यत्ववीप्सास्वार्थानतिक्रमे" इति यादवः ॥ नुदति प्रेरयति । अयं सगन्धः सगर्वः । संबन्धीति केचित् ॥ "गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः" इत्युभयत्रापि विश्वः ॥ ते तव वामो वामभागस्थः ॥ "वामस्तु वक्रे रम्ये स्यात्सव्ये वामगतेऽपि च" इति शब्दार्णवे ॥ चातकः पक्षिविशेषश्च मधुरं श्राव्यं नदति व्याहरति ॥ इदं निमित्तद्वयं वर्तते । वर्तिष्यते चापरं निमित्तमित्याह—गर्भेति ॥ गर्भः कुक्षिस्थो जन्तुः । "गर्भोऽपकारके ह्यग्नौ सुखे पनसकण्टके । कुक्षौ कुक्षिस्थजन्तौ च" इति यादवः ॥ तस्याधानमुत्पादनं तदेव क्षण उत्सवः । सुखहेतुत्वादिति भावः ॥ "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः"

त्यमरः ॥ तस्मिन्परिचयादभ्यासाद्धेतोः खे व्योम्नि । आबद्धमालाः । गर्भाधानसुखार्थं त्वत्समीपे बद्धपङ्क्तय इत्यर्थः ॥ उक्तं च कर्णोदये— "गर्भं बलाका दधतेऽभ्रयोगान्नाके निबद्धावलयः समन्तात्" इति ॥ बलाका बलाकाङ्गनाः नयनसुभगं दृष्टिप्रियं भवन्तं नूनं सत्यं सेविष्यन्ते ॥ अनुकूलमारुतचातकशब्दितबलाकादर्शनानां शुभसूचकत्वं शाकुनशास्त्रे दृष्टं तद्विस्तरभयान्नालेखि ॥ ९ ॥

अन्वयार्थः—अनुकूल वायु जैसे तुमको मंद मंद प्रेरणा करता है, और यह सगर्व तेरे वाम पार्श्वमें स्थित चातक मधुर शब्द करता है, गर्भाधानके क्षणमात्र अभ्यासके कारणसेही आकाशमें पंक्ति बांधे बलाका (बगले) नेत्रोंके सुख देनेवाले तुमको अवश्य सेवन करेंगे ॥ ९ ॥

भावार्थः—यह देखो ! अनुकूल पवन तुमको मन्द २ चला रहा है । यह निहारो ! तुम्हारी बांई ओर चातक पक्षी गर्वसहित मधुर गायन करके तुमको संतुष्ट करता है । और (यह दोनों शुभसूचक शाकुन हुए । आगे तीसराभी होता है की) गर्भिणी होनेका समय आया, मनमें पूर्वाभ्यासके कारण ऐसा समस्त बलाकाङ्गनाओंकी पांति नेत्रानन्ददायक तुम्हें भेटनेके लिये निश्चय करके आकाशको उड़रही है ॥ ९ ॥

न च तस्या नाशाद्गतस्खलनाद्वा निरर्थकस्त्वत्प्रयास इत्याह—

**तां चावश्यं दिवसगणनातत्परामेकपत्नी-**
**मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।**
**आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां**
**सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥ १० ॥**

**अन्वयः**—[हे मेघ त्वम्] दिवसगणनातत्पराम् । [अतएव] अव्यापन्नाम् एकपत्नीम् भ्रातृजायाम् ताम् अविहतगतिः अवश्यम् द्रक्ष्यसि । [तथाहि] आशाबन्धः प्रणयि [अतएव] कुसुमसदृशम् [अतएव] विप्रयोगे सद्यःपाति अङ्गनानाम् हृदयम् प्रायशः रुणद्धि ॥ १० ॥

**तां चेति** ॥ हे मेघ, दिवसानामवशिष्टदिनानां गणनायां संख्याने

तत्परामासक्ताम् ॥ "तत्परे प्रसितासक्तौ" इत्यमरः ॥ अतएवाव्यापन्नामभृताम् । शापावसाने मदागमनमत्याशया जीवन्तीमित्यर्थः । एकः पतिर्यस्याः सैकपत्नी ताम् । पतिव्रतामित्यर्थः ॥ "नित्यं सपत्न्यादिषु" इति ङीप् । नकारश्च ॥ भ्रातुर्मे जायां भ्रातृजायाम् । मातृवन्निःशङ्कं दर्शनीयामित्याशयः । तां मत्प्रियामविहतगतिरविच्छिन्नगतिः सन्नवश्यं द्रक्ष्यसि चालोकयिष्यसि एव ॥ तथाहि । आशातितृष्णा ॥ "आशा दिगतितृष्णयोः" इति यादवः ॥ बध्यतेऽनेनेति बन्धो बन्धनम् । वृन्तमिति यावत् । आशैव बन्ध आशाबन्धः कर्ता ॥ प्रणयि प्रेमयुक्तमत एव कुसुमसदृशम् । सुकुमारमित्यर्थः । अत एव विप्रयोगे विरहे सद्यःपाति सद्योभ्रंशनशीलमङ्गनानां हृदयं जीवितम् ॥ "हृदयं जीविते चित्ते वक्षस्याकूतयोः" इति शब्दार्णवे ॥ प्रायशः प्रायेण रुणद्धि प्रतिबध्नाति ॥ अर्थान्तरन्यासः ॥१०॥

**अन्वयार्थः**-(हे मेघ! तू) दिवस गिननेमें तत्पर, इसी कारणसे जीवित उस पतिव्रता मुझअपने भाईकी भार्याको, स्वच्छन्दगति होनेके कारण अवश्य देखेगा, ( क्योंकि ) आशारूपी बन्धनही प्रेमयुक्त होनेके कारण पुष्पसदृश ( सुकुमार ), वियोगमें शीघ्रही नष्ट होनेवाले बालाओंके जीवनकू बहुधा रोक लेता है ॥ १० ॥

**भावार्थः**-हे भइय! तुम्हारी गति कहीं नहीं रुक सकती. तुम हमारे जनानेमें प्रवेश करके देखोगे कि-तुम्हारी पतिपरायणा भावज ( या भाभी ) शापवाले वर्षके कितने दिन बीते, और कितने दिन बाकी रहे हैं; ऐसा गिन रही है। इस असहनशील विरहज्वालासे दग्ध होकर, उसनें प्राण कभी नहीं छोड़े होंगे । क्योंकि-कुसुमसमान सुकुमारी होनेके कारण पतिका वियोग होनेसे तत्काल नाश होनेवाला स्त्रियोंका जीवन केवल आशारूप बन्धनपर टिका रहता है; अर्थात् मेरे आनेकी आशा होनेके कारण वह न मरी होगी ॥ १० ॥

संप्रति सहायसंपत्तिश्चास्तीत्याह—

**कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां**
**तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः ।**
**आ कैलासाद्बिसकिसलयच्छेदपाथेयवन्तः**
**संपत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥११॥**

अन्वयः—यत् महीम् उच्छिलीन्ध्राम् [ अतएव ] अवन्ध्याम् कर्तुम् प्रभवति तत् श्रवणसुभगम् गर्जितम् श्रुत्वा मानसोत्काः बिसकिसलयच्छेदपाथेयवन्तः राजहंसाः नभसि भवतः आ कैलासात् सहायाः सम्पत्स्यन्ते ॥ ११ ॥

कर्तुमिति ॥ यद्गर्जितं कर्तृ, महीमुच्छिलीन्ध्रामुद्भूतकन्दलिकाम् ॥ "कन्दल्यां च शिलीन्ध्रा स्यात्" इति शब्दार्णवे ॥ अत एवावन्ध्यां सफलां कर्तुं प्रभवति शक्नोति शिलीन्ध्राणां भाविसस्यसंपत्तिसूचकत्वादिति भावः । तदुक्तं निमित्तनिदाने—"कालाभ्रयोगादुदिताः शिलीन्ध्राः संपन्नसस्यां कथयन्ति धात्रीम्" इति ॥ तच्छ्रवणसुभगं श्रोत्रसुखम् । लोकस्येति शेषः । ते तव गर्जितं श्रुत्वा मानसोत्का मानसे सरस्युन्मनसः । उत्सुका इति यावत् ॥ "उत्क उन्मनाः" इति निपातनात्साधु ॥ काव्यान्तरे मानसस्य हिमदुष्टत्वाद्दिनस्य च हंसानां रोगहेतुत्वादन्यत्र गता हंसाः पुनर्वर्षासु मानसमेव गच्छन्तीति प्रसिद्धिः ॥ बिसकिसलयानां मृणालाग्राणां छेदैः शकलैः पाथेयवन्तः । पथि साधु पाथेयं पथिभोज्यम् ॥ "पथ्यतिथिवसतिस्वपतेर्ढञ्" ॥ तद्वन्तः । मृणालकन्दशकलसम्बलवन्त इत्यर्थः । राजहंसा हंसविशेषाः ॥ "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः ॥ नभसि व्योम्नि भवतस्तव । आ कैलासात् कैलासपर्यन्तम् ॥ पदद्वयं चैतत् ॥ सहायाः सयात्राः ॥ "सहायस्तु सयात्रः स्यात्" इति शब्दार्णवे ॥ संपत्स्यन्ते भविष्यन्ति ॥११॥

**अन्वयार्थः**—जिसका गर्जना पृथ्वीको कन्दलिका उत्पन्न करनेमें सफल करनेको समर्थ होता है, वही तुम्हारा कानोंको सुखदायक गर्जना सुनकर, मानससरोवर जानेमें उत्सुक मृणालोंके अग्रभागके खण्ड मार्गमें भोजनको लियेहुए राजहंस आकाशमें तेरी कैलासपर्यन्त सहायताको प्राप्त होंगे ॥ ११ ॥

**भावार्थः**—कन्द मूल फलादिके उत्पत्तिकी सूचक, पृथ्वीको सफल करनेमें समर्थ जनानन्ददायक तेरी गर्जना है; उसको सुनकर, मानससरोवरपर जानेके लिये उत्कंठित राजहंसगण मार्गमें खानेके लिये छतियें ( कमलकी घघोलैं ) लेकर आकाशमार्गमें कैलासपर्वततक तुम्हारे साथ जायंगे ॥ ११ ॥

आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु।
काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥१२॥

**अन्वयः**—प्रियसखम् तुङ्गम् पुंसां वन्द्यैः रघुपतिपदैः मेखलासु अङ्कितम् अमुम् शैलम् आलिङ्ग्य आपृच्छस्व काले काले भवतः संयोगम् एत्य चिरविरहजम् उष्णम् बाष्पम् मुञ्चतः यस्य स्नेहव्यक्तिः भवति ॥ १२ ॥

**आपृच्छस्वेति** ॥ प्रियं सखायं प्रियसखम् ॥ "राजाहःसखिभ्यष्टच्" इति टच् समासान्तः ॥ तुङ्गमुन्नतं पुंसां वन्द्यैर्नराराधनीयै रघुपतिपदै रामपादन्यासैर्मेखलासु कटकेषु ॥ "अथ मेखला। श्रोणिस्थानेऽद्रिकटके कटिबन्धे" इति यादवः ॥ अङ्कितं चिह्नितम्। इत्थं सखित्वान्महत्त्वात्पवित्रत्वाच्च संभावनार्हम्। अमुं शैलं चित्रकूटाद्रिमालिङ्ग्यापृच्छस्व साधो यामीत्यामन्त्रणेन सभाजय ॥ "आमन्त्रणसभाजने। आप्रच्छन्नम्" इत्यमरः ॥ "आङि नुप्रच्छ्योरुपसंख्यानम्" इत्यात्मनेपदम् ॥ सखित्वं निर्वाहयति—काल इति ॥ काले काले प्रतिप्रावृट्कालम्। सुहृत्समागमनकालश्च कालशब्देनोच्यते ॥ वीप्सायां द्विरुक्तिः ॥ भवतः संयोगं संपर्कमेत्य चिरविरहजमुष्णं बाष्पमुष्माणं नेत्रजलं च ॥ "बाष्पो नेत्रजलोष्मणोः" इति विश्वः ॥ मुञ्चतो यस्य शैलस्य स्नेहव्यक्तिः प्रेमाविर्भावो भवति। स्निग्धानां हि चिरविरहसंगतानां बाष्पपातो भवतीति भावः ॥ १२ ॥

**अन्वयार्थः**—प्रियसखा, उन्नत, तथा पुरुषोंके वन्दनीय रघुनाथजीके चरणकमलोंसे कटकोंमें अंकित इस पर्वतकूं आलिंगन करके (जाऊं) ऐसा पूछ! समय समयपर तुम्हारे संयोगको प्राप्त होकर बहुत कालके विरहसे उत्पन्न हुए उष्ण स्वेद जल त्याग करनेसे जिस पर्वतके स्नेहका आविर्भाव होता है ॥ १२ ॥

**भावार्थः**—हे पयोद! अब यात्राकालमें सर्वजन—वंद्य श्रीरामचंद्रजीके चरणचिन्ह लगनेसे पवित्रतटवाले अपने सखा अति ऊंचे चित्रकूट पर्वतसे तुम स्नेहसहित बातचीत करो। देखो! यह चित्रकूट

पर्वत सालके माल वर्षाकालके समय तुम्हारे समागमका सुख पाय बहुतदिनोंके वियोगकी आगसे गरम हुई बाष्पको गलाकर अपना स्नेह प्रकाशित करता है ॥ १२ ॥

संप्रति तस्य मार्गं कथयति—

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
संदेशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयम् ।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्ताऽसि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्य ॥१३॥

अन्वयः—(हे) जलद । तावत् कथयतः [ मत्तः ] त्वत्प्रयाणानुरूपम् मार्गम्, शृणु तदनु श्रोत्रपेयम् मे संदेशम् श्रोष्यसि । यत्र खिन्नः खिन्नः शिखरिषु पदम् न्यस्य क्षीणः क्षीणः स्रोतसाम् पयः परिलघु उपभुज्य गन्तासि ॥ १३ ॥

मार्गमिति ॥ हे जलद, तावदिदानीं कथयतः । मत्त इति शेषः । त्वत्प्रयाणस्यानुरूपमनुकूलं मार्गमध्वानम् ॥ "मार्गो मृगपदे मासि सौम्यर्क्षेऽन्वेषणेऽध्वनि" इति यादवः ॥ शृणु । तदनु मार्गश्रवणानन्तरं श्रोत्राभ्यां पेयं पानार्हम् । अतितृष्णया श्रोतव्यमित्यर्थः ॥ पेयग्रहणात्संदेशस्यामृतसाम्यं गम्यते ॥ मे संदेशं वाचिकम् ॥ "संदेशवाग्वाचिकं स्यात्" इत्यमरः ॥ श्रोष्यसि । यत्र मार्गे खिन्नः खिन्नोऽभीक्ष्णं क्षीणबलः सन् ॥ "नित्यवीप्सयोः" इति नित्यार्थे द्विर्भावः ॥ शिखरिषु पर्वतेषु पदं न्यस्य निक्षिप्य । पुनर्बललाभार्थं क्वचिद्विश्रम्येत्यर्थः । क्षीणः क्षीणोऽभीक्ष्णं कृशाङ्गः सन् ॥ अत्रापि कृदन्तत्वात्पूर्ववद्विरुक्तिः ॥ स्रोतसां परि लघु गुरुत्वदोषरहितम् । उपलास्फालनखेदितत्वात्पथ्यमित्यर्थः ॥ तथा च वाग्भट्टः—"उपलास्फालनक्षेपविच्छेदैः खेदितोदकाः हिमवन्मलयोद्भूताः पथ्या नद्यो भवन्त्यमूः ॥" इति ॥ पयः पानीयमुपभुज्य शरीरपोषणार्थमभ्यवहृत्य च गन्तासि गमिष्यसि ॥ गमेर्लुट् ॥ १३॥

**अन्वयार्थः**—हे मेघ ! प्रथम कहनेवाले मुझसे अपने जाने योग्य मार्गकूं सुन, तदनन्तर श्रवणयोग्य मेरे संदेसेको सुन्ना । जिस मार्गमें निरन्तर क्षीणबल होकर पर्वतोंमें चरण रख कृशाङ्ग हुआ तूं नदियोंके गुरुत्वदोषरहित जलको पीकर जायगा ॥ १३ ॥

भावार्थः-हे जलधर! (एक तो तुम्हें अलकापुरीके सुखकारक मार्गकी पहचान नहीं, और चलनेके श्रमसे तुम बहुत बलहीन व दुर्बल होजाओगे; इससे) इसमार्गमें थकनेके समय (बीचमें आनेवाले) ऊंचे ऊंचे पर्वतोंपर विश्राम लेते चले जाना; और क्षीण होनेपर (वहींपर बहता हुआ) नदियोंका पथ्यकारक पानी सेवन करनेको मिलेगा, उसको पीना। प्रथम तो यह मार्ग तुम मुझसे सुन लो; फिर केवल कानोंके पीने योग्य अमृतसमान हमारा संदेशा सुनो ॥ १३ ॥

**अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभि-**
**र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ।**
**स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं**
**दिङ्नागानां पथि परिहरन्स्थूलहस्तावलेपान् ॥ १४ ॥**

**अन्वयः**—पवनः अद्रेः शृङ्गम् हरति किंस्वित् इति उन्मुखीभिः मुग्धसिद्धाङ्गनाभिः चकितचकितम् दृष्टोत्साहः सरसनिचुलात् अस्मात् स्थानात् पथि दिङ्नागानाम् स्थूलहस्तावलेपान् परिहरन् उदङ्मुखः सन् खम् उत्पत ॥ १४ ॥

**अद्रेरिति** ॥ पवनो वायुरद्रेश्चित्रकूटस्य शृङ्गं हरति किंस्वित् ॥ किंस्विच्छब्दो विकल्पवितर्कार्थादिषु पठितः ॥ इति शङ्कयोन्मुखीभिरुन्नतमुखीभिः ॥ "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीष् ॥ मुग्धाभिर्मूढाभिः ॥ "मुग्धः सुन्दरमूढयोः" इत्यमरः । सिद्धानां देवयोनिविशेषाणामङ्गनाभिश्चकितचकितं चकितप्रकारं यथा तथा ॥ "प्रकारे गुणवचनस्य" इति द्विर्भावः ॥ दृष्टोत्साहो दृष्टोद्योगः सन् । सरसा आर्द्रा निचुलाः स्थलवेतसा यस्मिंस्तस्मात् ॥ "वानीरे कविभेदे स्यान्निचुलः स्थलवेतसे" इति शब्दार्णवे ॥ अस्मात्स्थानादाश्रमात्पथि नभोमार्गे दिङ्नागानां दिग्गजानां स्थूला ये हस्ताः करास्तेषामवलेपानाक्षेपान्परिहरन् ॥ "हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि" इति । "अवलेपस्तु गर्वे स्यात्क्षेपणे दूषणेऽपि च" इति च विश्वः ॥ उदङ्मुखः सन् । अलकाया उदीच्यत्वादित्याशयः ॥ खमाकाशमुत्पतोद्गच्छ ॥ अत्रेदमन्यदर्थान्तरं ध्वनयति—रसिको निचुलो नाम महाकविः कालिदासस्य सहाध्यायः परापादितानां कालिदासप्रबन्धदूषणानां परिहर्ता यस्मि-

स्थाने समानस्थानादुन्मुखो निचुलाद्भुतगुणः कल्पि सारस्वत-
मार्गे दिङ्नागानाम ॥ पूजायां बहुवचनम ॥ दिङ्नागाचार्यस्य कालिदा-
सानां प्रतिपक्ष हस्तावलेपान्हस्तविन्यासपूर्वकाणि दूषणानि परिहरन् ॥
'अवलेपस्तु गर्वे स्यालेपने दूषणेऽपि च' इति विश्वः ॥ अद्रेरद्रिकल्प-
स्य दिङ्नागाचार्यस्य शृङ्गं प्राधान्यम ॥ "शृङ्गं प्राधान्यसान्वोश्च" इत्य-
मरः ॥ हरति किमिति हेतुना सिद्धैः सारस्वतसिद्धैर्महाकविभिरङ्ग-
नाभिश्च दृष्टोत्साहः सन्नुन्मुखीभिर्वीक्षितः स्वप्रबन्धमात्मानं वा प्रति
कवेर्भङ्गिनि ॥ "संगतौ दोषगुणा भवन्तीत्येतन्मृषा येन जलाशयेऽपि ।
स्थित्वानुकूलं निचुलश्चलन्तमात्मानमारक्षति सिन्धुवेगात् ॥" इत्येत-
च्छ्लोकनिर्माणात्तस्य कवेर्निचुलसंज्ञेत्याहुः ॥ १४ ॥

अन्वयार्थः-'क्या वायु पर्वतके शृङ्गको हरण करताहै'? इस विचा-रसे ऊपरको मुख उठाये मुग्ध सिद्धोंकी स्त्रियोंकरके आश्चर्यसे देखा है उत्साह जिसका ऐसा तू गीले स्थलवेतवाले इस स्थानसे आकाशमार्गमें दिग्गजोंकी सूंडके बडे आक्षेपोंको हरता हुआ उत्तर-को मुख कियेहुए आकाशमें जा ॥ १४ ॥

भावार्थः—हे वारिवाह! जिस ठिकाने रससे भरे वेत उगेहुएहैं ऐसे इस आश्रमसे (रामगिरिसे) उछल उत्तरकी ओर मुख कर, और अपने प्रचंड वेगसे, दिग्गजोंकी सूंडसे छूटे हुए फुवारोंको बंद करने-वाले होकर तुम आकाशमार्गको गमन करो, कि जिसकरके तुम्हारी उडान देख सिद्धलोगोंकी मुग्धस्त्रियें विचारैंगी "अरे! क्या यह पवन चित्रकूट पर्वतके शिखरको उखाड़के हरण करके लियेजाता है!!" ऐसे समझकर चकित हो तुह्मारी ओरको देखती रहैंगी ॥ १४ ॥

रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्ता-
द्वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य ।
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥ १५ ॥

अन्वयः—वल्मीकाग्रात् रत्नच्छायाव्यतिकर इव प्रेक्ष्यम् आख-ण्डलस्य एतत् धनुःखंडम् पुरस्तात् प्रभवति, येन ते श्यामम् वपुः स्फुरितरुचिना बर्हेण गोपवेषस्य विष्णोः अतितराम् कान्तिम् आपत्स्यते ॥ १५ ॥

**रत्नेति** ॥ रत्नच्छायानां पद्मरागादिमणिप्रभाणां व्यतिकरो मिश्रणमिव प्रेक्ष्यं दर्शनीयमाखण्डलस्यैन्द्रस्यैतद्धनुःखण्डम् ॥ एतदिति हस्तेन निर्देशो विवक्षितः ॥ पुरस्तादग्रे वल्मीकाग्राद्वामलूरविवरात् ॥ "वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्" इत्यमरः ॥ प्रभवत्याविर्भवति । येन धनुःखण्डेन ते तव श्यामं वपुः । स्फुरितरुचिनोज्ज्वलकान्तिना बर्हेण पिच्छेन ॥ "पिच्छबर्हे नपुंसके" इत्यमरः ॥ गोपवेषस्य विष्णोर्गोपालस्य कृष्णस्य श्यामं वपुरिव । अतितरां कान्तिं शोभामापत्स्यते प्राप्स्यते ॥ १५ ॥

**अन्वयार्थः**–वल्मीकके विवरसे मणियोंकी कान्तिके मिलनेकी समान दर्शनीय, इन्द्रका यह धनुषखण्ड आगे प्रादुर्भूत होता है, जिससे तेरा श्यामशरीर मनोहर कान्तिवाले मयूरपुच्छ और गोपवेषधारी विष्णुकी अत्यन्त कान्तिको प्राप्त होगा ॥ १५ ॥

**भावार्थः**–(पातालमें रहनेवाले नागोंके शिरमेसे निकलेहुए) अनेक प्रकारके रत्नोंकी कान्तिके मेलसे बांबीजात नानाप्रकारके रत्नोंकी कान्तिका समुदायसरीखा दीखनेवाला इन्द्रके धनुषका भाग तुह्मारे आगे दीख रहा है । ग्वालका वेष धारण किये श्रीकृष्णाजीका श्याम शरीर चकचकित मोरकी पूंछकी पंखोंसे जैसा शोभायमान होता है, वैसेही तुह्मारा काला भुरंग दीखनेवाला शरीर इस (इन्द्रधनुषके) मेलसे शोभायमान होगा ॥ १५ ॥

> **त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः**
> **प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः ।**
> **सद्यः सीरोत्कषणसुरभि क्षेत्रमारुह्य मालं**
> **किंचित्पश्चाद्व्रज लघुगतिर्भूय एवोत्तरेण ॥ १६ ॥**

**अन्वयः**—कृषिफलम् त्वयि आयत्तम् इति प्रीतिस्निग्धैः भ्रूविलासानभिज्ञैः जनपदवधूलोचनैः पीयमानः सद्यः सीरोत्कषणसुरभि मालम् क्षेत्रम् आरुह्य किंचित्, पश्चात् व्रज भूयः लघुगतिः उत्तरेणैव [व्रज] ॥ १६ ॥

**त्वयीति** ॥ कृषेर्हलकर्मणः फलं सस्यं त्वयि ॥ अधिकरणविवक्षायां सप्तमी॥ आयत्तमधीनम् ॥ "अधीनो निघ्न आयत्तः" इत्यमरः॥ इति

हेतोः प्रीत्या स्निग्धैः । अकृत्रिमप्रेमार्द्रैरित्यर्थः । भ्रूविलासानां विकाराणामनभिज्ञैः । पामरत्वादिति शेषः । जनपदवधूनां पल्लीयोषितां लोचनैः पीयमानः सादरं वीक्ष्यमाणः सन् । मालं मालाख्यं क्षेत्रं शैलप्रायमुन्नतस्थलम् ॥ "मालमुन्नतभूतलम्" इत्युत्पलमालायाम् ॥ सद्यस्तत्कालमेव सीरैर्हलैरुत्कषणेन कर्षणेन सुरभि घ्राणतर्पणं यथा तथारुह्य । तत्राभिवृष्येत्यर्थः ॥ "सुरभिर्घ्राणतर्पणः" इत्यमरः ॥ किंचित्पश्चाल्लघुगतिरत्यन्तं निर्वृष्टत्वात्क्षिप्रगमनः सन् ॥ "लघु क्षिप्रमरं द्रुतम्" इत्यमरः ॥ भूयः पुनरप्युत्तरेणैवोत्तरमार्गेणैव व्रज गच्छ ॥ तृतीयाविधाने "प्रकृत्यादिभ्य उपसंख्यानम्" इति तृतीया ॥ यथा कश्चिल्लघुलुभः पतिः कुत्रचित्क्षेत्रे कलत्रे गूढं विहृत्य ॥ "क्षेत्रं शरीरकेदारे सिद्धस्थानकलत्रयोः" इति विश्वः ॥ दाक्षिण्यभङ्गभयान्नीचमार्गेण निर्गत्य पुनः सर्वाध्यक्ष इव संचरति तद्वदिति ध्वनिः ॥ १६ ॥

अन्वयार्थः—कृषिकर्मका फल तेरेही आधीन है, इसकारण प्रेमसे गीले भृकुटिविलासके न जाननेहारे किसानोंकी वधूटियोंके नेत्रोंसे (आदरपूर्वक) देखा हुआ, हलके जोतनेसे घ्राणकूं तृप्तकरनेहारे (पर्वतसमान ऊंचे) मालक्षेत्रमें (वृष्टि करके) कुछदेरके उपरान्त जा फिर लघुगति होकर उत्तरकी ओरको जाना ॥ १६ ॥

भावार्थः—हे पाथोद! खेतीकार्यका फल अन्नादि तुम्हारेही वशमें है; जो तुम जल न वर्षाओ तो किसीप्रकारसे अन्नादि उत्पन्न न होवें। इसीलिये भ्रूविलासमें अजान जनपदोंमें रहनेवाली किसानोंकी स्त्रियें प्रेमभरित नेत्रोंसे तुमको देखैंगी; तुमभी उससमय हलके जोतनेसे घ्राणकूं तृप्त करनेहारे (पर्वतसमान ऊंचे) मालनामक क्षेत्रमें जल वर्षायकर कुछ पश्चिमकी ओरको जाय, जल चुकजानें और शरीरके छोटा होजानेसे शीघ्रगामी हो, फिर उत्तरकी ओरको जाना ॥ १६ ॥

**त्वामासारप्रशमितवनोपप्लवं साधु मूर्ध्ना**
**वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः ।**
**न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय**
**प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥ १७ ॥**

**अन्वयः**—आम्रकूटः सानुमान् आसारप्रशमितवनोपप्लवम् अध्वश्रमपरिगतम् त्वाम् साधुः मूर्ध्ना वक्ष्यति [ तथाहि ] क्षुद्रः

**अपि संश्रयाय मित्रे प्राप्ते प्रथमसुकृतापेक्षया विमुखः न भवति यः तथा उच्चैः [ सः ] अभिमुखः पुनः किम् [ वक्तव्यम् ] ॥१७॥**

**त्वामिति** ॥ आम्राश्चूताः कूटेषु शिखरेषु यस्य स आम्रकूटो नाम सानुमान्पर्वतः ॥ "आम्रश्चूतो रसालोऽसौ" इति । "कूटोऽस्त्री शिखरं शृङ्गम्" इति चामरः ॥ आसारो धारावृष्टिः ॥ "धारासंपात आसारः" इत्यमरः ॥ तेन प्रशमितो वनोपप्लवो दावाग्निर्येन तम् । कृतोपकारमित्यर्थः । अध्वश्रमेण परिगतं व्याप्तं त्वां साधु सम्यङ्मूर्ध्ना वक्ष्यति वोढा ॥ वहेर्लृट् ॥ तथाहि । क्षुद्रः कृपणोऽपि ॥ "क्षुद्रो दरिद्रे कृपणे नृशंसे" इति यादवः ॥ संश्रयाय संश्रयणाय मित्रे सुहृदि ॥ "अथ मित्रं सखा सुहृत्" इत्यमरः ॥ प्राप्ते आगते सति । प्रथमसुकृतापेक्षया पूर्वोपकारपर्यालोचनया विमुखो न भवति । यस्तथा तेन प्रकारेणोच्चैरुन्नतः ॥ स आम्रकूटः किं पुनर्विमुखो न भवतीति किमु वक्तव्यमित्यर्थः ॥ एतेन प्रथमावसथे सौख्यलाभात्ते कार्यसिद्धिरस्तीति सूचितम् । तदुक्तं निमित्तनिदाने—"प्रथमावसथे यस्य सौख्यं तस्याखिलेऽध्वनि । शिवं भवति यात्रायामन्यथा त्वशुभं ध्रुवम् ॥" इति॥१७॥

**अन्वयार्थः**–आम्र हैं शिखरोंपर जिसके ऐसा आम्रकूटनामा पर्वत धारावर्षनेसे दावानलके शान्त होनेपर मार्गके श्रमसे व्याप्त तुझकू, सम्यक् प्रकार शिरसें धारण करैगा । (क्योंकि) दरिद्रभी ठहरनेके निमित्त मित्रके प्राप्त होनेपर पहले उपकारके विचारसें विमुख नहीं होता, और जो उसप्रकासें उन्नत है फिर उस्मे क्या (कहना)

**भावार्थः**–हे धराधर ! तुम अविरल जलधारा वर्षायकर दावानल इत्यादि बनके समस्त उपद्रवोंको शान्त कियाकरते हो; तुम यहांतक हितकारी मित्र हो । जब तुम मार्गमें चलनेसे थककर पहुंचोगे, तब आम्रकूटपर्वत प्यारा मित्र समझ परम आदरसे तुमको अपने मस्तकपर धारण करेगा; क्योंकि, हितकारी मित्रके आनेपर आम्रकूट पर्वतकीसमान अति उन्नत पुरुषकी बात तो दूर रहे, कृपण पुरुषभी पहले किये हुए उपकारको याद कर मित्रकेप्रति विमुख नहीं होता ॥ १७ ॥

**छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रै-**
**स्त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे ।**

नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः॥१८॥

अन्वयः-[ हे मेघ ] परिणतफलद्योतिभिः काननाम्रैः छन्नोपान्तः अचलः स्निग्धवेणीसवर्णे (तथाहि) त्वयि शिखरम् आरूढे मध्ये श्यामः शेषविस्तारपाण्डुः भुवः स्तनइव अमरमिथुनप्रेक्षणीयाम् अवस्थाम् नूनम् यास्यति ॥ १८ ॥

छन्नेति ॥ हे मेघ, परिणतैः परिपक्वैः फलैर्द्योतन्त इति तथोक्तैः । आपाढे वनचूताः फलन्ति पच्यन्ते च मेघवातेनेत्याशयः । काननाम्रैर्वनचूतैश्छन्नोपान्त आवृतपार्श्वोऽचल आम्रकूटाद्रिः स्निग्धवेणीसवर्णे मसृणकेशबन्धच्छाये । श्यामवर्ण इत्यर्थः ॥ "वेणी तु केशबन्धे जलस्रुतौ" इति यादवः ॥ त्वयि शिखरं शृङ्गमारूढे सति ॥ "यस्य च भावेन भावलक्षणम्" इति सप्तमी ॥ मध्ये श्यामः शेषे मध्यादन्यत्र विस्तारे परितः पाण्डुर्हरिणः ॥ "हरिणः पाण्डुरः पाण्डुः" इत्यमरः ॥ भुवः स्तन इव । अमरमिथुनानाम् । खेचराणामिति भावः । प्रेक्षणीयां दर्शनीयामवस्थां नूनं यास्यति । मिथुनग्रहणं कामिनामेव स्तनत्वेनोत्प्रेक्षा संभवतीति कृतम् । यथा परिश्रान्तः कश्चित्कामी कामिनीनां कुचकलशे विश्रान्तः सन्स्वपिति तद्वद्भवानपि भुवो नायिकायाः स्तन इति ध्वनिः ॥ १८ ॥

अन्वयार्थः-(हे मेघ) पक्के फलोंकी कान्तिवाले आम्रके वनोंकरकै पार्श्वके ढकनेके कारण आम्रकूट कोमलवेणीकी समान रंगवाले तेरे शिखरपर आरूढ होनेमें मध्यमें श्याम और शेषविस्तारमें पाण्डुवर्ण पृथ्वीके स्तनकी समान देवी देवताओंकी दर्शनयोग्य अवस्थाकू निश्चय प्राप्त होगा ॥ १८ ॥

भावार्थः-हे बलाहक! तुह्मारा रंग चिकने केशबधनकी समान है। आम्रकूट पर्वतका शिखर फलोंके समूहसे शोभायमान और वनैले आम्र वृक्षोंसे ढकाहुआ है। तुह्मारे शिखरपर चढनेके पीछे वह आम्रकूट पर्वत, स्त्रियोंके साथ वर्त्तमान विलास करते हुए देवताओंका मनरंजनकारी होगा। उसका बीच श्यामवर्ण और शेषविस्तारभाग गौरवर्ण रहनेसे वह पृथ्वीके स्तनोंकी समान दिखाई देगा ॥ १८ ॥

स्थित्वा तस्मिन्वनचरवधूभुक्तकुञ्जे मुहूर्तं
तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः ।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ १९ ॥

अन्वयः—( हे मेघ ! ) वनचरवधूभुक्तकुञ्जे तस्मिन् मुहूर्तम् स्थित्वा तोयोत्सर्गद्रुततरगतिः तत्परम् वर्त्म तीर्णः [ त्वम् ] उपलविषमे विन्ध्यपादे विशीर्णाम् रेवाम् गजस्य भक्तिच्छेदैः विरचिताम् भूतिमिव द्रक्ष्यसि ॥ १९ ॥

स्थित्वेति ॥ हे मेघ, वने चरन्ति ते वनचराः ॥ "तत्पुरुषे कृति बहुलम्" इति बहुलग्रहणादलुग्भवति ॥ तेषां वधूभिर्भुक्ताः कुञ्जा लतागृहा यत्र तस्मिन् ॥ "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः ॥ तत्र ते नयनविनोदोऽस्तीत्यर्थः । तस्मिन्नाम्रकूटे मुहूर्तमल्पकालम् । न तु चिरं स्वकार्यविरोधादिति भावः ॥ "मुहूर्तमल्पकाले स्याद्घटिका द्वितयेऽपि च" इति शब्दार्णवे ॥ स्थित्वा विश्रम्य । तोयोत्सर्गेण "त्वामासार—" इत्युक्तवर्षणेन द्रुततरगतिर्लाघवाद्धेतोरतिक्षिप्रगमनः सन् । तस्मादाम्रकूटात्परमनन्तरं तत्परं वर्त्म मार्गं तीर्णोऽतिक्रान्तः । उपलैः पाषाणैर्विषमे विन्ध्यस्याद्रेः पादे प्रत्यन्तपर्वते ॥ "पादाः प्रत्यन्तपर्वताः" इत्यमरः ॥ विशीर्णां समन्ततो विसृमराम् ॥ एतेन कस्याश्चित्कामुक्याः प्रियतमचरणपातोऽपि ध्वन्यते ॥ रेवां नर्मदाम् ॥ "रेवा तु नर्मदा सोमोद्भवा मेखलकन्यका" इत्यमरः ॥ गजस्याङ्गे शरीरे भक्तयो रचनाः । रेखा इति यावत् ॥ "भक्तिर्निषेवणे भागे रचनायाम्" इति शब्दार्णवे ॥ तासां छेदैर्भङ्गिभिर्भाभिर्विरचितां भूतिं शृङ्गारमिव भसितमिव वा ॥ "भूतिर्मातङ्गशृङ्गारे जातौ भस्मनि संपदि" इति विश्वः ॥ द्रक्ष्यसि । अयमपि महांस्ते नयनकौतुकलाभ इति भावः ॥ १९ ॥

अन्वयार्थः—हे मेघ ! वनचारियोंकी बहुओंसे भोगेहुए तिस कुंजमें एक मुहूर्त स्थित होकर जलत्यागन करनेके कारण शीघ्रगतिवाला होकर उसके आगेका मार्ग अतिक्रमण करकै, तू पथरोंसे विषम मार्गवाले विन्ध्याचलके प्रान्तोंमें छिन्न हुई रेवानदीकूं हाथीके अंगोंमें रचनाके छिद्रोंमें श्वेत भूतिकी नाई देखैगा ॥ १९ ॥

भावार्थः-इस पर्वतके जिस स्थानमें वनचारियोंकी वधूटियें कुंजमें विहार करती हैं उस स्थानमें क्षणभरतक विश्राम ले जब जल वर्षानेसे लघु होजाओगे, और कुछ शीघ्रगामी होगे, तब कुछ दूर आगे चलकर विन्ध्याचलके ऊंचे नीचे पत्थरोंसे टकराकर कल कल शब्द करतीहुई इधर उधर तिरछी वहनेवाली रेवा नदी, एक बड़े हाथीके अंगोंपर शोभित हुई विचित्र रचनाके समान तुम्हें दिखाई देगी ॥ १९ ॥

तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।
अन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥२०॥

अन्वयः—हे घन ! वान्तवृष्टिः तिक्तैः वनगजमदैः वासितम् जम्बूकुञ्जप्रतिहतरयम् तस्याः तोयम् आदाय गच्छेः अन्तस्सारम् त्वाम् अनिलः तुलयितुम् न शक्ष्यति [ तथाहि ] रिक्तः सर्वोऽपि लघुः भवति पूर्णता गौरवाय ( भवति ) ॥ २० ॥

तस्या इति ॥ हे मेघ, वान्तवृष्टिरुद्गीर्णवर्षः सन् । कृतवमनश्च व्यज्यते । तिक्तैः सुगन्धिभिस्तिक्तरसवद्भिश्च ॥ "तिक्तो रसे सुगन्धौ च" इति विश्वः ॥ वनगजमदैर्वासितं सुरभितं भावितं च । हिमवद्विन्ध्यमलया गजानां प्रभवा इति विन्ध्यस्य गजप्रभवत्वादिति भावः । जम्बूकुञ्जैः प्रतिहतरयं प्रतिबद्धवेगम् । सुखपेयमित्यर्थः । अनेन लघुत्वं कषायभावना च व्यज्यते । तस्या रेवायास्तोयमादाय गच्छेर्व्रज । हे घन मेघ, अन्तः सारो बलं यस्य तं त्वामनिल आकाशवायुः । शरीरस्थश्च गम्यते । तुलयितुं न शक्ष्यति शक्तो न भविष्यति । तथाहि । रिक्तोऽन्तः सारशून्यः सर्वोऽपि लघुर्भवति । प्रकम्प्यो भवतीत्यर्थः । सारवत्ता गौरवायाप्रकम्प्यत्वाय भवतीत्यर्थः ॥ अयमत्र ध्वनिः—आदौ वमनशोधितस्य पुंसः पश्चाच्छ्लेष्मशोषणाय लघुतिक्तकषायाम्बुपानाल्लब्धबलस्य वातप्रकम्पो न स्यादिति। तथाह वाग्भट्टः— "काषायाश्चाहिमास्तस्य विशुद्धौ श्लेष्मणो हिताः । किमु तिक्तकषाया वा ये निसर्गात्कफापहाः ॥ कृतशुद्धेः क्रमात्पीतपेयादेः पथ्यभोजिनः । वातादिभिर्न बाधा स्यादिन्द्रियैरिव योगिनः ॥" इति ॥ २० ॥

**अन्वयार्थः**-हे मेघ ! वान्त वर्षानेवाला होताहुआ सुगंधियुक्त वा तीखे वनहाथियोंके मदसे वासित जामुनकी कुंजोंकरके शान्त वेगवाला होनेसे उस ( रेवा ) के जलको लेकर जाना । भीतर, ( जलरूपी ) बलवाले तुझको पवन उठानेको समर्थ न होगी । कारण कि रीता सबहीको हलका होता है; पूर्णता गौरवके निमित्त होती है२०

**भावार्थः**-हे वारिवाह ! इस रेवानदीकी धार इस जामन-कुंजमें टकरा रही है; उसका जल बनैले मतवाले हाथियोंके त्यागेहुए मदसे सुगन्धित होगयाहै । तुम जल वर्षानेके पीछे थोडासा यह जल ग्रहण करके फिर चलना । क्योंकि तुह्मारे भीतर सार रहनेसे पवन तुमको चलायमान नहीं करसकेगा । देखो ! कोई पुरुष जब रीता होता है, तब वह सबहीके निकट छोटा होजाता है, और पूर्ण पुरुष सबकेही निकट प्रतिष्ठा पाता है ॥ २० ॥

**नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरूढै-**
**राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम् ।**
**जग्ध्वारण्येष्वधिकसुरभि गन्धमाघ्राय चोर्व्याः**
**सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम्॥२१॥**

**अन्वयः—सारङ्गाः । अर्धरूढैः केशरैः हरितकपिशम् नीपम् दृष्ट्वा च अनुकच्छम् आविर्भूतप्रथममुकुलाः कन्दलीः जग्ध्वा अरण्येषु अधिकसुरभिम् उर्व्याः गन्धम् आघ्राय जललवमुचः मार्गम् सूचयिष्यन्ति ॥ २१ ॥**

**नीपमिति** ॥ सारङ्गा मतङ्गजाः कुरङ्गा भृङ्गा वा ॥ "सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे" इति विश्वः ॥ अर्धरूढैरेकदेशोद्गतैः केसरैः किञ्जल्कैर्हरितं पालाशवर्णं कपिशं कृष्णपीतं च ॥ "पालाशो हरितो हरित्" इति "श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते" इति चामरः ॥ श्यामवर्णमिति यावत् ॥ "वर्णो वर्णेन" इति समासः ॥ नीपं स्थलकदम्बकुसुमम् ॥ "अथ स्थलकदम्बके । नीपः स्यात्पुलके" इति शब्दार्णवे ॥ दृष्ट्वा संप्रेक्ष्य । विदित्वेति यावत् । तथा कच्छेष्वनूपेष्वनुकच्छम् ॥ "अव्ययं विभक्ति-" इत्यादिना विभक्त्यर्थेऽव्ययीभावः ॥ "जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः" इत्यमरः ॥

आविर्भूताः प्रथमाः प्रथमोत्पन्ना मुकुला यासां ताः कन्दलीर्भूमिकदलीः ॥ "द्रोणपर्णी स्निग्धकन्दा कन्दली भूकदल्यपि" इति शब्दार्णवे ॥ जग्ध्वा भक्षयित्वा ॥ "अदो जग्धिः–" इति जग्ध्यादेशः ॥ अरण्येष्वधिकसुरभिमतिघ्राणतर्पणम् ॥ "दग्धारण्येषु" इति पाठे "दग्धम्" इत्यधिकविशेषणम् ॥ अर्थवशात्कन्दलीश्च दृष्ट्वैवेत्यन्वयो द्रष्टव्यः ॥ उर्व्या भूमेर्गन्धमाघ्राय जललवमुचो मेघस्य ते तव मार्गं सूचयिष्यन्त्यनुमापयिष्यन्ति । यत्र यत्र वृष्टिकार्यं कन्दलीमुकुलनीपकुसुमादिकं दृश्यते तत्र तत्र त्वया वृष्टमित्यनुमीयत इति भावः॥२१॥

**अन्वयार्थः**—हाथी, हिरण, वा भौंरे; एकदेशमें प्राप्तहुए पराग़ोंसे हरे और पीले वर्णके स्थलकदम्बके फूलको देखकर जलवाले अनूप देशोंके निकट प्रथम उत्पन्न हुई हैं कली जिसमें ऐसी भूमिकदलीको भक्षणकरके वनोंमें अधिक सुगन्धिमान् पृथ्वीकी गन्धको सूंघकर जलके कण छोडनेहारे तेरे मार्गकूं सूचन करेंगे ॥ २१ ॥

**भावार्थः**—हे पयोद ! सारंगगण अधउठे केशरसे, हरे और पीले रंगवाले भूमि-कदम्ब देखकर, व जलवाले देशमें भूमिपर उपजेहुए केलेका पहला निकलाहुआ मौल भक्षण कर, वनोंमें नया जल वर्षाय अधिक सुगन्धिमान पृथ्वीकी गन्धको सूंघकर तुमको मार्ग दिखावेंगे॥

प्रक्षिप्तमपि पद्यं व्याख्यायते—

**अम्भोबिन्दुग्रहणचतुरांश्चातकान्वीक्षमाणाः**
**श्रेणीभूताः परिगणनया निर्दिशन्तो बलाकाः ।**
**त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः**
**सोत्कण्ठानि प्रियसहचरीसम्भ्रमालिङ्गितानि ॥२२॥**

**अन्वयः**—अम्भोबिन्दुग्रहणचतुरान् चातकान् वीक्षमाणाः च श्रेणीभूताः बलाकाः परिगणनया निर्दिशन्तः । सिद्धाः स्तनितसमये सोत्कण्ठानि प्रियसहचरीसम्भ्रमालिङ्गितानि आसाद्य त्वाम् मानयिष्यन्ति ॥ २२ ॥

**अम्भ इति** ॥ अम्भोबिन्दूनां वर्षोदबिन्दूनां ग्रहणे । "सर्वंसहापतितमम्बु न चातकस्य हितम्" इति शास्त्राद्भूस्पृष्टोदकस्य तेषां रोगहेतुत्वादन्तराल एव स्वीकारे । चतुरांश्चातकान्वीक्षमाणाः कौतुकात्पश्यन्तः श्रेणीभूता बद्धपङ्क्तीः ॥ अभूततद्भावे च्विः ॥ बलाका बकपङ्क्तीः

परिगणनयैका द्वे तिस्र इति संख्यानेन निर्दिशन्तो हस्तेन दर्शयन्तः सिद्धाः स्तनितसमये त्वद्गर्जितकाले सोत्कम्पान्युत्कम्पपूर्वकाणि प्रियसहचरीणां संभ्रमेणालिङ्गितान्यासाद्य । स्वयं ग्रहणाश्लेषसुखमनुभूयेत्यर्थः । त्वां मानयिष्यन्ति । त्वन्निमित्तत्वात्सुखलाभस्येति भावः ॥

**अन्वयार्थः**–जलबिन्दुओंके ग्रहण करनेमें चतुर चातकोंको देखते हुए, और पंक्ति बांधे बगलोंकी गिन्ती करके कहते हुए सिद्धगण गर्जन समयमें उत्कंठावाली प्यारी सहचरियोंके सम्भ्रमपूर्वक आलिंगनको प्राप्त होकर तुझकू सन्मान करेंगे ॥ २२ ॥

**भावार्थः**–हे धराधर! मार्गमें तुम देखोगे कि सिद्धलोग, जलबिन्दु–ग्रहण–परायण चातकोंको देखते२,कतार बंधी हुई बकपांतिको निहार उनको एक २ करके गिन रहे हैं। उस समय जो तुम गर्जन करोगे, तो तुह्मारे अनुग्रहसे प्यारीके उत्कंठित होजानेके कारण घबडानेसे आलिंगन पाय सुख प्राप्तकर वे ( सिद्धगण ) तुह्मैं धन्यवाद देंगे ॥ २२ ॥

**उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः**
**कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ।**
**शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः**
**प्रत्युद्यातः कथमपि भवान्गन्तुमाशु व्यवस्येत्॥२३॥**

**अन्वयः**—हे सखे ! मत्प्रियार्थम् द्रुतमपि यियासोः ककुभसुरभौ पर्वते पर्वते कालक्षेपम् अहम् उत्पश्यामि सजलनयनैः शुक्लापाङ्गैः केकाः स्वागतीकृत्य प्रत्युद्यातः भवान् कथमपि आशु गन्तुम् व्यवस्येत् ॥ २३ ॥

उत्पश्यामीति ॥ हे सखे मेघ, मत्प्रियार्थं यथा तथा द्रुतं क्षिप्रम्॥ 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः ॥ यियासोर्यातुमिच्छोरपि ॥ यातेः सन्नन्तादुप्रत्ययः ॥ ते तव ककुभैः कुटजकुसुमैः सुरभौ सुगन्धिनि ॥ "ककुभः कुटजेऽर्जुने" इति शब्दार्णवे ॥ पर्वते पर्वते प्रतिपर्वतम् ॥ वीप्सायां द्विरुक्तिः ॥ कालक्षेपं कालविलम्बम् ॥ "क्षेपो विलम्बे निन्दायाम्" इति विश्वः ॥ उत्पश्याम्युत्प्रेक्षे ॥ विलम्बहेतुं दर्शयन्नाशुगमनं प्रार्थयते—शुक्लेति ॥ सजलानि सानन्दबाष्पाणि नयनानि

सजलापाङ्गैः शुक्लापाङ्गैर्मयूरैः ॥ "मयूरो बर्हिणो बर्हीं शुक्लापाङ्गः शिखावलः" इति यादवः ॥ केकाः स्ववाणीः ॥ "केका वाणी मयूरस्य" इत्यमरः ॥ स्वागतीकृत्य स्वागतवचनीकृत्य मत्युद्यातः मत्युद्गतः मत्युद्गमितानित्यर्थः । भवान्कथमपि यथाकथंचिदाशु गन्तुं व्यवस्येदुद्युञ्जीत ॥ मार्थने लिङ् । "शेषे मथमः" इति मथमपुरुषः । त्वमर्थे भवच्छब्दः युष्मदस्मच्छब्दव्यतिरेकात् ॥ "स्वागतीकृत्य केकाः" इत्यत्र केकास्वारोप्यमाणस्य स्वागतवचनस्य मकृतमत्युद्गमनोपयोगात्परिणामालंकारः । तदुक्तमलंकारसर्वस्वे—"आरोप्यमाणस्य मकृतोपयोगित्वे परिणामः" इति ॥ २३ ॥

अन्वयार्थः-मित्र ! मेरे प्रिय करनेको शीघ्रतासे जातेहुए तेरे कुटज पुष्पोंकी सुगन्धिवाले प्रति पर्वतमें कालके विलम्बकी मैं उत्प्रेक्षा करूंगा । नेत्रोंमें जल भरे मोरोंसे वाणीद्वारा स्वागत वचनोंकरकै अतिथिसत्कार किया तू, किसी प्रकारसेभी शीघ्र चलनेकूं समर्थ होगा ॥ २३ ॥

भावार्थः—हे सखे ! यद्यपि तुम हमारा प्रियकार्य सिद्ध करनेके अभिप्रायसे अति शीघ्र गमन करनेका अभिलाष कियेहुएहो; तोभी मैं देखताहूं कि खिलेहुए कुटजफूलोंके समूहका सुगन्धिवाला पवन पर्वत २ तुम्हें देर लगानेका कारण होगा । क्योंकि उन पर्वतोंके मोरगण, केकाशब्दके द्वारा तुमसे आगमन प्रश्न कर सजलनयनसे साथ२ आय अति कठिनाईसे जब तुमको विदा देंगे, तब कहीं तुम शीघ्रतासे चलसकोगे ॥ २३ ॥

पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नै-
नींडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ।
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः
संपत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥२४॥

अन्वयः—हे मेघ, त्वयि आसन्ने दशार्णाः सूचिभिन्नैः केतकैः पाण्डुच्छायोपवनवृतयः गृहबलिभुजाम् नीडारम्भैः आकुलग्रामचैत्याः परिणतफलश्यामजम्बूवनान्ताः कतिपयदिनस्थायिहंसाः सम्पत्स्यन्ते ॥ २४ ॥

**पाण्ड्विति**॥ हे मेघ, त्वय्यासन्ने संनिकृष्टे सति दशार्णा नाम जनपदाः सूचिभिन्नैः सूचिषु मुकुलाग्रेषु भिन्नैर्विकसितैः ॥ "केतकीमुकुलाग्रेषु सूचिः स्यात्" इति शब्दार्णवे ॥ केतकैः केतकीकुसुमैः पाण्डुच्छाया हरितवर्णा उपवनानां वृतयः कण्टकशाखावरणा येषु ते तथोक्ताः ॥ "प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिः" इत्यमरः । तथा गृहबलिभुजां काकादिग्रामपक्षिणां नीडारम्भैः कुलायनिर्माणैः ॥ "कुलायो नीडमस्त्रियाम्" इत्यमरः ॥ चित्याया इमानि चैत्यानि रथ्यावृक्षाः ॥ "चैत्यमायतने बुद्धवन्द्ये चोद्देशपादपे" इति विश्वः ॥ आकुलानि संकीर्णानि ग्रामेषु चैत्यानि येषु ते तथोक्तः । तथा परिणतैः पक्वैः फलैः श्यामानि यानि जम्बूवनानि तैरन्ता रम्याः ॥ "मृतावववसिते रम्ये समाप्तावन्त इष्यते" इति शब्दार्णवे ॥ तथा कतिपयेष्वेव दिनेषु स्थायिनो हंसा येषु ते तथोक्ता एवंविधाः संपत्स्यन्ते भविष्यन्ति ॥ "पोटायुवतिस्तोककतिपय–" इत्यादिना कतिपयशब्दस्योत्तरपदत्वेऽपि न तच्छब्दस्योत्तरत्वमस्त्यस्य शास्त्रस्य प्रायिकत्वात् ॥ २४॥

**अन्वयार्थः**–हे मेघ! तेरे निकट होनेपर दशार्णनाम देश कलियोंके अग्रभागमें खिलेहुए केतकीके फूलोंकरकै हरितवर्णवाली उपवनोंकी कंटकशाखाके आवरणवाले काकादि ग्रामपक्षियोंके घौंसला बनानेसै व्याप्त ग्रामकी गलियोंके वृक्षवाले, पकेहुए फलोंसे श्यामजामनके वनोंसै मनोहर कि जहां कुछदिनोंतक हंसोंकी स्थिति होती है वहां प्राप्त होंगे. ॥ २४ ॥

**भावार्थः**—हे चपलविलासिन! तुह्मारे दशार्ण देशके निकट पहुंचनेपर, वहांके सब उपवनोंका वेडा अग्रभागमें खिलेहुए केवडेके फूलोंसे श्वेतवर्ण होजायगा । काकादि ग्रामीण पक्षियोंके घौंसला बनानेसे, गांवके वृक्ष भरजायंगे. पकेहुए फलसमूहसे श्यामवर्ण हुए जम्बूवनमें यह देश रमणीय दिखलाई देगा, हंसगणभी वहां थोडे दिनतक टिकेंगे ॥ २४ ॥

**तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं**
**गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्धा ।**

तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यस्मा-
त्सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥ २५ ॥

अन्वयः—तेषाम् दिक्षु प्रथितविदिशालक्षणाम् राजधानीम् गत्वा सद्यः कामुकत्वस्य अविकलम् फलम् लब्धा यस्मात् स्वादु चलोर्मि तीरोपान्तस्तनितसुभगम् वेत्रवत्याः पयः सभ्रूभङ्गम् मुखमिव पास्यसि ॥ २५ ॥

तेषामिति ॥ दिक्षु प्रथितं प्रसिद्धं विदिशेति लक्षणं नामधेयं यस्यास्ताम् ॥ "लक्षणं नाम्नि चिह्ने च" इति विश्वः तेषां दशार्णानां संबन्धिनीम् । धीयन्तेऽस्यामिति धानी ॥ "करणाधिकरणयोश्च" इति ल्युट् ॥ राज्ञां धानी राजधानी ॥ "कृद्योगलक्षणा षष्ठी समस्यते" इति वचनात्समासः ॥ तां प्रधाननगरीम् ॥ "प्रधाननगरी राज्ञां राजधानीति कथ्यते" इति शब्दार्णवे ॥ गत्वा प्राप्य सद्यः कामुकत्वस्य विलसितायाः ॥ "विलासी कामुकः कामी स्त्रीपरो रतिलम्पटः" इति शब्दार्णवे अविकलं समग्रं फलं प्रयोजनं लब्धा लप्स्यते । त्वयेति शेषः ॥ कर्मणि लुट् ॥ कुतः । यस्मात्कारणात्स्वादु मधुरम् । चला ऊर्मयो यस्य तच्चलोर्मि तरङ्गितं वेत्रवत्या नाम नद्याः पयः सभ्रूभङ्गं भ्रुकुटियुक्तम् । दशनपीडयेति भावः । मुखमिवाधरमिवेत्यर्थः । तीरोपान्ते तटप्रान्ते यत्स्तनितं गर्जितं तेन सुभगं यथा तथा । स्तनितशब्देन मणितमपि व्यपदिश्यते । "ऊर्ध्वमुच्चलितकण्ठनासिकं हुङ्कृतं स्तनितमल्पघोषवत्" इति लक्षणात् ॥ पास्यसि ॥ पिबतेर्लृट् ॥ "कामिनामधरास्वादः सुरतादतिरिच्यते" इति भावः ॥ २५ ॥

**अन्वयार्थः**—तिन दिशाओंमें विख्यात विदिशा नामवाली राजधनीमें जाकर तत्काल कामियेंाके सम्पूर्ण फलको प्राप्त होगा, कारण कि मधुर और चलायमान तरंगवाली तटके प्रान्तोंमें गर्जनेसे शोभायमान वेत्रवतीनदीके जलकूं भृकुटियुक्त मुखकी नाईं पान करेगा ॥२५॥

**भावार्थः**—इस दशार्णदेशके बीच सर्वत्र विख्यात विदिशानाम राजधानीमें जायकर तुम शीघ्रही विलासिताके समस्त भोगको भोगोगे । किनारेवाले प्रदेशोंमें बिजलीके कडकनेरूप शब्दकी सहाय-

तासे चंचलनेत्रयुक्त रमणीय स्त्रीके मुखको समानी वेत्रवतीनदीका चंचलतरंगभूषित स्वादिष्ट जल तुम पान करोगे ॥ २६ ॥

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो-
स्त्वत्संपर्कात्पुलकितमिव प्रौढपुष्पैः कदम्बैः ।
यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २६ ॥

अन्वयः—हे मेघ ! तत्र विश्रामहेतोः प्रौढपुष्पैः कदम्बैः त्वत्सम्पर्कात् पुलकितमिव नीचैराख्यम् गिरिम् अधिवसेः यः पण्यस्त्रीरतिपरिमलोद्गारिभिः शिलावेश्मभिः नागराणाम् उद्दामानि यौवनानि प्रथयति ॥ २६ ॥

नीचैरिति ॥ हे मेघ, तत्र विदिशासमीपे । विश्रामो विश्रमः खेदापनयः ॥ भावार्थे घञ्प्रत्ययः ॥ तस्य हेतोः । विश्रामार्थमित्यर्थः ॥ "षष्ठी हेतुप्रयोगे" इति षष्ठी ॥ विश्रामेत्यत्र "नोदात्तोपदेशस्य मान्तस्यानाचमेः" इति पाणिनीये वृद्धिप्रतिषेधेऽपि "विश्रामो वा" इति चन्द्रव्याकरणे विकल्पेन वृद्धिविधानाद्रूपसिद्धिः ॥ प्रौढपुष्पैः प्रबुद्धकुसुमैः कदम्बैर्नीपवृक्षैस्त्वत्संपर्कात्तव सङ्गात् । पुलका अस्य जाताः पुलकितमिव संजातपुलकमिव स्थितम् ॥ तारकादित्वादितच्प्रत्ययः ॥ नीचैरित्याख्या यस्य तं नीचैराख्यं गिरिमधिवसेः । गिरौ वसेरित्यर्थः । "उपान्वध्याङ्वसः" इति कर्मत्वम् ॥ यो नीचैर्गिरिः । पण्याः क्रेयाः स्त्रियः पण्यस्त्रियो वेश्याः ॥ "वारस्त्री गणिका वेश्या पण्यस्त्री रूपजीविनी" इति शब्दार्णवे ॥ तासां रतिषु यः परिमलो गन्धविशेषः ॥ "विमर्दोत्थे परिमलो गन्धे जनमनोहरे" इत्यमरः ॥ तमुद्गिरन्त्याविष्कुर्वन्तीति तथोक्तानि तैः । शिलावेश्मभिः कन्दरैर्नागराणां पौराणामुद्दामान्युत्कटानि यौवनानि प्रथयति प्रकटयति ॥ उत्कटयौवनाः कचिदनुरक्ता वाराङ्गना विश्रम्भविहाराकाङ्क्षिण्यो मात्रादिभयान्निशीथसमये कंचन विविक्तं देशमाश्रित्य रमन्ते । तच्चात्र बहुलमस्तीति प्रसिद्धिः ॥ अत्रोद्गारशब्दो गौणार्थत्वान्न जुगुप्सावहः । प्रत्युत काव्यस्यातिशोभाकर एव । तदुक्तं दण्डिना—"निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां वगाहते ॥" इति ॥ २६ ॥

अन्वयार्थ- हे मेघ तहां विश्रामके निमित्त प्रौढ फूलवाले कदम्बोंकरके तेरा संपर्क होनेसे पुलकितकी नाई नीचैः नामवाले पर्वतमें बसना जो पर्वत वेश्याओंकी रतिमें विशेषगन्ध प्रगट करनेवाली कन्दराओंसे नगरवासियोंके उत्कट यौवनको प्रगट करता है ॥२६॥

भावार्थः-हे जलद ! तुम विश्रामार्थ इस विदिशाराजधानीके निकट नीचनामक ( वामनगिरि ) पर्वतपर टिकना । जहां अधिक कदम्बफूलोंके फूलनेसे ऐसा जान पड़ेगा मानो तुम्हारेसाथ समागम होनेसेही इस पर्वतके रोम खड़े होगये हैं । इस पर्वतकी सब गुफायें वाराङ्गनाओंका रतिपरिमल-गन्ध विस्तार कर नागरिक जनोंके उद्दाम यौवनको प्रगट करती हैं ॥ २६ ॥

विश्रान्तः सन्व्रज वननदीतीरजातानि सिञ्च-
न्नुद्यानानां नवजलकणैर्यूथिकाजालकानि ।
गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात्क्षणपरिचितः पुष्पलावीमुखानाम् ॥२७॥

अन्वयः—तत्र विश्रान्तः सन् वननदीतीरजातानि उद्यानानाम् यूथिकाजालकानि नवजलकणैः सिञ्चन् च गण्डस्वेदापनयनरुजा क्लान्तकर्णोत्पलानाम् पुष्पलावीमुखानाम् छायादानात् क्षणपरिचितः व्रज ॥ २७ ॥

विश्रान्त इति ॥ विश्रान्तः संस्तत्र नीचैर्गिरौ विनीताध्वश्रमः सन् । अथ विश्रान्तेरनन्तरम् । वनेऽरण्ये या नद्यस्तासां तीरेषु जातानि स्वयंरूढानि । अकृत्रिमाणीत्यर्थः ॥ "नदनदी—" इति पाठे "पुमान्स्त्रिया" इत्येकशेषो दुर्वारः ॥ तेषामुद्यानानामारामाणां संबन्धीनि यूथिकाजालकानि मागधीकुसुममुकुलानि ॥ "अथ मागधी गणिका यूथिका" इत्यमरः ॥ "कोरकजालककलिकाकुड्मलमुकुलानि तुल्यानि" इति हलायुधः ॥ नवजलकणैः सिञ्चन्नार्द्रीकुर्वन् ॥ अत्र सिञ्चतेरार्द्रीकरणार्थत्वाद्द्रवद्रव्यस्य करणत्वम् । यत्र तु क्षरणमर्थस्तत्र द्रवद्रव्यस्य कर्मत्वम् । यथा "रेतः सिक्त्वा कुमारीषु" । "सुखैर्निषिञ्चन्तमिवामृतं त्वचि" इत्येवमादि । एवं किरतीत्यादीनामपि "रजः किरति मारुतः" । "अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः" इत्यादिष्वर्थभेदाश्रयणेन रजोलाजादीनां कर्मत्वकरणत्वे गमयितव्ये ॥ तथा

गण्डयोः कपोलयोः स्वेदस्यापनयनेन प्रमार्जनेन या रुजा पीडा ॥ भिदादित्वादङ्प्रत्ययः ॥ तया क्लान्तानि म्लानानि कर्णोत्पलानि येषां तेषां तथोक्तानाम् । पुष्पाणि लुनन्तीति पुष्पलाव्यः पुष्पावचायिकाः स्त्रियः ॥ "कर्मण्यण्" ॥ "टिड्ढाणञ्–" इत्यादिना ङीप् ॥ तासां मुखानि । छायाया अनातपस्य दानात् । कान्तिदानं च ध्वन्यते ॥ "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः ॥ कामुकदर्शनात्कामिनीनां मुखविकासो भवतीति भावः ॥ क्षणपरिचितः क्षणं संसृष्टः सन् । न तु चिरम् । गच्छ ॥ २७ ॥

**अन्वयार्थः**–तहां विश्राम करके वनकी नदियोंके किनारोंमें उत्पन्नहुए बागोंके चमेलीके फूलकी कलियोंको नवीन जलके कणोंसे सींचताहुआ तथा कपोलोंमें पसीनेके पोंछनेकी पीडाकरके मलिन कानोंके कमलवाली फूल तोडनेहारी स्त्रियोंको मुखोंकू छाया देनेसै क्षणमात्र परिचय देताहुआ जा ॥ २७ ॥

**भावार्थः**—तुम इसप्रकार मार्गकी थकावटको दूर कर, वन और नदियोंके तीरवाली फुलवाडियोंमें स्वयम् उगीहुइ चमेलीके फूलोंकी कलियोंके समुदायोंपर जलकी फुहार वर्षाते २ चलेजाना। धूपके संतापसे गालोंपर आयेहुए पसीनेके पोंछनेसे, जिनके कानोंमें पहरेहुए कमलफूल काले और मलगिजे होजांयगे, उन फूलतोडनेहारी स्त्रियोंके मुखपर छाया कर उनसे क्षणमात्र परिचित होना। और फिर आगेको चलेजाना ॥ २७ ॥

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥ २८ ॥

**अन्वयः**—उत्तराशाम् प्रस्थितस्य भवतः पन्थाः यदपि वक्रः तथापि उज्जयिन्याः सौधोत्सङ्गप्रणयविमुखः मास्मभूः तत्र विद्युद्दामस्फुरितचकितैः लोलापाङ्गैः पौराङ्गनानाम् लोचनैः यदि न रमसे [ तर्हि ] त्वम् वञ्चितः असि ॥ २८ ॥

**वक्र इति** ॥ उत्तराशामुदीचीं दिशं प्रति प्रस्थितस्य भवतः पन्था

उज्जयिनीमार्गो वक्रो यदपि। दूरो यद्यपीत्यर्थः ॥ विन्ध्यादुत्तरवाहिन्या निर्विन्ध्यायाः प्राग्भागे कियत्यपि दूरे स्थितोज्जयिनी। उत्तरपथस्तु निर्विन्ध्यायाः पश्चिम इति वक्तव्यम् ॥ तथाप्युज्जयिन्या विशालनगरस्य ॥ "विशालोज्जयिनी समा" इत्युत्पलः ॥ सौधानामुत्सङ्गेषूपरिभागेषु प्रणयः परिचयः ॥ "प्रणयः स्यात्परिचये याच्ञायां सौहृदेऽपि च" इति यादवः ॥ तस्य विमुखः पराङ्मुखो मा स्म भूः। न भवेत्यर्थः ॥ "स्मोत्तरे लङ् च" इति चकारादाशीरर्थे लुङ्। "न माङ्योगे" इत्यडागमप्रतिषेधः ॥ तत्रोज्जयिन्यां विद्युद्दाम्नो विद्युल्लतानां स्फुरितेभ्यः स्फुरणेभ्यश्चकितैर्लोलापाङ्गैश्चञ्चलकटाक्षैः पौराङ्गनानां लोचनैर्न रमसे यदि तर्हि त्वं वञ्चितः प्रतारितोऽसि। जन्मवैफल्यं भवेदित्यर्थः ॥ २८ ॥

**अन्वयार्थः**—उत्तरदिशामें जातेहुए तुह्मे (उज्जयन)का मार्ग यद्यपि टेढा है तथापि उज्जयनी नगरीके महलोंके ऊपरवाले भागोंके परिचयसे विमुख मत होना तहां बिजलियोंकी मालाओंके स्फुरायमान होनेसे चंचलकटाक्षवारे नगरनारियोंके नेत्रोंसे जो न रमण करैगा (तो) तू वञ्चित अर्थात् वृथा जन्मवाला है ॥ २८ ॥

**भावार्थः**—उत्तरदिशाके जानेवाले तुमको उज्जयिनीका मार्ग यद्यपि थोडासा वांका होगा, तथापि इस नगरीके ऊंचे राजमन्दिरोंको देखनेके विषयमें तुमको विमुख नहीं होना चाहिये। वैसेही विद्युल्लताके स्फुरणसे भयभीत हुई इस नगरीकी स्त्रियोंके चंचलनेत्रकटाक्षसे मोहित होकर जो तुम नहीं रमे तो वास्तवमें धोखा खाओगे, अर्थात् तुह्मारा जन्म वृथा जायगा ॥ २८ ॥

संप्रत्युज्जयिनीं गच्छतस्तस्य मध्येमार्गं निर्विन्ध्यासंबन्धमाह—

**वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः**
**संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः।**
**निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः संनिपत्य**
**स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ २९ ॥**

**अन्वयः**—[हे सखे] पथि वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः स्खलितसुभगं संसर्पन्त्याः दर्शितावर्तनाभेः निर्विन्ध्यायाः सन्निपत्य रसाभ्यन्तरः भव (हि) स्त्रीणाम् प्रियेषु विभ्रम आद्यम् प्रणयवचनम् हि ॥ २९ ॥

**वीचीति** ॥ हे सखे, पथ्युज्जयिनीपथे वीचिक्षोभेण तरङ्गचलनेन स्तनितानां मुखराणाम् ॥ कर्तरि क्तः ॥ विहगानां हंसानां श्रेणिः पङ्क्तिरेव काञ्चीगुणो यस्यास्तस्याः स्खलितेनोपस्खलनेन मदस्खलितेन च सुभगं यथा यथा संसर्पन्त्याः प्रवहन्त्या गच्छन्त्याश्च तथा दर्शितः प्रकटित आवर्तोऽम्भसां भ्रम एव नाभिर्यया ॥ "स्यादावर्तोऽम्भसां भ्रमः" इत्यमरः ॥ निष्क्रान्ता विन्ध्यान्निर्विन्ध्या नाम नदी ॥ "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासः। "द्विगुप्राप्तापन्नालम्–" इत्यादिना परवल्लिङ्गताप्रतिषेधः ॥ तस्या नद्याः संनिपत्य संगत्य। रसो जलमभ्यन्तरे यस्य सः। अन्यत्र रसेन शृङ्गारेणाभ्यन्तरोऽन्तरङ्गो भव। सर्वथा तस्या रसमनुभवेत्यर्थः ॥ "शृङ्गारादौ जले वीर्ये सुवर्णे विषशुक्रयोः। तिक्तादावमृते चैव निर्यासे पारदे ध्वनौ ॥ आस्वादे च रसं प्राहुः" इति शब्दार्णवे ॥ ननु तत्प्रार्थनामन्तरेण कथं तत्रानुभवो युज्यत इत्यत आह—स्त्रीणामिति ॥ स्त्रीणां प्रियेषु विषये विभ्रमो विलास एवाद्यं प्रणयवचनं प्रार्थनावाक्यं हि। स्त्रीणामेष स्वभावो यद्विलासैरेव रागप्रकाशनम्। न तु कण्ठत इति भावः ॥ विभ्रमश्चात्र नाभिसंदर्शनादिरुक्त एव ॥ २९ ॥

**अन्वयार्थः**-हे सखे! उज्जयनीके मार्गमें तरंगोंके चलायमान होनेसे शब्दकरनेहारे हंसोंकी पंक्तिकी मेखलावाली मदके स्खलित होनेसे शोभायमान बहती, हुई दिखाई है जलकीभौंररूप नाभी दिखानेहारी निर्विन्ध्या नदीसे संगम कर रसके अनुभव करनेहारा हो, (कारण कि) स्त्रियोंके प्रियोंमें विलासही प्रथम प्रार्थनावाक्य होते हैं ॥ २९ ॥

**भावार्थः**—तुम उज्जयिनी नगरीके मार्गमें गमन करनेके समय, तरंगोंके खलबलानेसे शब्दायमान विहंग-पांतिरूप तगडी पहेर, डगमगाकर चलनेवाली, भवररूप नाभि दिखानेवाली; निर्विन्ध्यानदीके साथ मिल और उसे भोगकर शृङ्गाररससे पूर्ण होवो। (तुम ऐसी शंका मतकरना कि मैं विना उसके प्रार्थना कियेही कैसे उसका रमण करूं? सो नहीं; कारण कि) स्त्रियें पहले अपने मुखसे प्रार्थनाकी कुछ बात नहीं कहतीं, प्रेमीके निकट हाव भावका प्रगट करनाही नारिजातिका प्रथम प्रेम-वचन और प्रार्थना-वचन है ॥ २९ ॥

निर्विन्ध्याया विरहावस्थां वर्णयंस्तन्निराकरणं प्रार्थयते—

वेणीभूतप्रतनुसलिलासावतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः॥३०॥

अन्वयः—वेणीभूतप्रतनुसलिला तटरुहतरुभ्रंशिभिः जीर्णपर्णैः पाण्डुच्छाया अतएव हे सुभग! विरहावस्थया अतीतस्य ते सौभाग्यम् व्यञ्जयन्ती सा सिन्धुः येन विधिना कार्श्यम् त्यजति सः त्वया एव उपपाद्यः ॥ ३० ॥

वेणीति ॥ अवेणी वेणीभूतं वेण्याकारं प्रतनु स्तोकं च सलिलं यस्याः सा तथोक्ता । अन्यत्र वेणीभूतकेशपाशेति च ध्वन्यते । रुहन्तीति रुहाः ॥ इगुपधलक्षणः कप्रत्ययः ॥ तटयो रुहा ये तरवस्तेभ्यो भ्रश्यन्तीति तथोक्तैः । जीर्णपर्णैः शुष्कपत्रैः पाण्डुच्छाया पाण्डुवर्णा । अत एव हे सुभग, विरहावस्थया पूर्वोक्तप्रकारया करणेन ॥ अतीतस्यैतावन्तं कालमतीत्य गतस्य । प्रोषितस्येत्यर्थः । ते तव सौभाग्यं सुभगत्वम् ॥ "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः ॥ व्यञ्जयन्ती प्रकाशयन्ती । स खलु सुभगो यमङ्गनाः कामयन्त इति भावः । असौ पूर्वोक्ता सिन्धुर्नदी निर्विन्ध्या ॥ "स्त्री नद्यां ना नदे सिन्धुर्देशभेदेऽम्बुधौ गजे" इति वैजयन्ती ॥ येन विधिना व्यापारेण कार्श्यं त्यजति स विधिस्त्वयैवोपपाद्यः । कर्तव्य इत्यर्थः । स च विधिरेकत्र वृष्टिरन्यत्र संभोगस्तदभावनिबन्धनत्वात्कार्श्यस्येति भावः ॥ इयं पञ्चमी मदनावस्था । तदुक्तं रतिरहस्ये—"नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥ उन्मादो मूर्छा मृतिरित्येताः स्मरदशा दशैव स्युः ॥" इति ॥ "तामतीतस्य" इति पाठमाश्रित्य सिन्धुर्नाम नद्यन्तरमिति व्याख्यातम् । किंतु सिन्धुर्नाम कश्चिन्नदः काश्मीरदेशेऽस्ति । नदी तु कुत्रापि नास्तीत्युपेक्ष्यमित्याचक्षेत ॥ ३० ॥

**अन्वयार्थः**—वेणीके आकारवाले थोडेजलवाली किनारोंके वृक्षोंसे गिरेहुए पुराने पत्तोंकरके पाण्डुवर्णवाली, इसी कारण हे सुभग वियोग अवस्थासे बीते हुए तेरे सौभाग्यकूं प्रकाश करती हुई वह

निर्विन्ध्यानदी जिस प्रकार कृशताको त्यागन करै वह तुझे करना उचित है ॥ ३० ॥

**भावार्थः**—हे सुभग! जिस नदीका सूक्ष्म जल-प्रवाह विरहकी अवस्थामें एक वेणीस्वरूप हुआ है, किनारोंपर लगेहुए वृक्षोंके समूहसे, पुराने पत्ते गिरजानेसे, जो पाण्डुवर्णकी होगई है; तुम जब परदेशमें थे तब जिस नदीने बिरहावस्थामें तुह्मारीही सुभगता ( कामिनी काम्यता ) प्रकाशित की है; वह निर्विन्ध्या जिस्से दुबलेपनको छोडै, वह ( कार्य ) करना सबप्रकारसे तुह्मारा कर्तव्य है ३०

**प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धा-**
**न्पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम् ।**
**स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां**
**शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम् ॥३१॥**

**अन्वयः**—उदयनकथाकोविदग्रामवृद्धान् अवन्तीन् प्राप्य तत्र पूर्वोद्दिष्टाम् श्रीविशालाम् विशालाम् पुरीम् अनुसर ( कथमिव स्थितां पुरीम्) सुचरितफले स्वल्पीभूते गाम् गतानाम् स्वर्गिणाम् शेषैः पुण्यैः हृतम् कान्तिमत् एकम् दिवः खण्डमिव ॥३१॥

**प्राप्येति** ॥ विदन्तीति विदाः ॥ इगुपधलक्षणः कः ॥ ओकसो वेद्यस्थानस्य विदाः कोविदाः ॥ ओकारलुपे पृषोदरादित्वात्साधुः ॥ उदयनस्य वत्सराजस्य कथानां वासवदत्ताहरणाद्यद्भुतोपाख्यानानां कोविदास्तत्त्वज्ञा ग्रामेषु ये वृद्धास्ते सन्ति येषु तानवन्तींस्तन्नामजनपदान्प्राप्य तत्र पूर्वोद्दिष्टां पूर्वोक्तां "सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः" इत्युक्तां श्रीविशालां संपत्तिमहतीम् ॥ "शोभासंपत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते" इति शाश्वतः ॥ विशालां पुरीमुज्जयिनीमनुसर व्रज ॥ कथमिव स्थिताम् । सुचरितफले पुण्यफले स्वर्गोपभोगलक्षणे स्वल्पीभूते । अत्यल्पावशिष्टे सतीत्यर्थः । गां भूमिं गतानाम् ॥ "गौरिला कुम्भिनी क्षमा" इत्यमरः ॥ पुनरपि भूलोकगतानामित्यर्थः । स्वर्गिणां स्वर्गवतां जनानां शेषैर्भुक्तशिष्टैः पुण्यैः सुकृतैर्हृतमानीतम् । स्वर्गार्थानुष्ठितकर्मशेषाणां स्वर्गदानावश्यंभावादिति भावः । कान्तिरस्यास्तीति कान्तिमदुज्ज्वलम् । सारभूतमित्यर्थः । एकं भुक्तादन्यत् ॥ "एके मुख्यान्यकेवलाः" इत्यमरः ॥

दिवः स्वर्गस्य खण्डमिव स्थितामित्युत्प्रेक्षा । एतेनातिक्रान्तसकलभूलोकनगरसौभाग्यसारत्वमुज्जयिन्या व्यज्यते ॥ ३१ ॥

अन्वयार्थः—वत्सराजकी कथा जान्नेमें चतुर वृद्धोंसे युक्त गांववाले अवन्तीके जनपदोंमें प्राप्त होकर, तहांसे प्रथम कहीहुई लक्ष्मीसे भरीपुरी उज्जयनी पुरीको जाना ( किसकी समान स्थितहुई पुरीकू ) जो स्वर्गमें भोग करानेहारे पुण्योंके थोडे होनेपर पृथ्वीमें आये स्वर्गनिवासियोंके शेष पुण्योंकरके लायेहुए कान्तिवाले एक पृथ्वीके खंडकी समान है ॥ ३१ ॥

भावार्थः—जिस स्थानके ग्राम-वृद्धगण वत्सराजकी वासवदत्तादिके हरणविषयक अद्भुत उपाख्यान कहनेमें चतुर हैं ऐसे अवन्ति देशमें पहुंचकर पूर्वोक्त सौभाग्य-सम्पत्ति-शालिनी विशाला ( उज्जयिनी ) नगरीमें गमन करना । इस प्रधान राजधानीके देखनेसे जानपडेगा कि देवलोकवासी पुण्यात्मालोगोंका पुण्य चुकजानेपर जब वह धरतीपर गिरते हैं, तब उनकेही बचे बचाये पुण्यबलसे देवलोकके एक खण्डका उज्ज्वल सारांश इस स्थानमें लाया गया है ॥ ३१ ॥

**दीर्घीकुर्वन्पटु मदकलं कूजितं सारसानां**
**प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।**
**यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः**
**शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥ ३२ ॥**

अन्वयः—यत्र प्रत्यूषेषु पटु मदकलम् सारसानाम् कूजितम् दीर्घीकुर्वन् स्फुटितकमलामोदमैत्रीकषायः अङ्गानुकूलः शिप्रावातः प्रार्थनाचाटुकारः-प्रियतमइव स्त्रीणाम् सुरतग्लानिम् हरति ॥ ३२ ॥

**दीर्घीकुर्वन्निति** ॥ यत्र विशालायां प्रत्यूषेष्वहर्मुखेषु ॥ "प्रत्यूषोऽहर्मुखं कल्यम्" इत्यमरः ॥ पटु प्रस्फुटम् । मदकलं मदेनाव्यक्तमधुरम् । "ध्वनौ तु मधुरास्फुटे । कलः" इत्यमरः ॥ सारसानां पक्षिविशेषाणाम् ॥ "सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः" इति यादवः ॥ यद्वा सारसानां हंसानाम् ॥ "चक्राङ्गः सारसो हंसः" इति शब्दार्णवे ॥ कूजितं रुतं दीर्घीकुर्वन् । विस्तारयन्नित्यर्थः । या-

वद्धातं शब्दानुवृत्तेरिति भावः । एतेन प्रियतमः स्वचाटुवाक्यानुसारि क्रीडापक्षिकूजितमविच्छिन्नीकुर्वन्निति च गम्यते। स्फुटितानां विकसितानां कमलानामामोदेन परिमलेन सह या मैत्री संसर्गस्तेन कषायः सुरभिः ॥ "रागद्रव्ये कषायोऽस्त्री निर्यासे सौरभे रसे" इति यादवः अन्यत्र विमर्दगन्धीत्यर्थः ॥ "विमर्दोत्थे परिमलो गन्धे जनमनोहरे। आमोदः सोऽतिनिर्हारी" इत्यमरः ॥ अङ्गानुकूलो गात्रसुखस्पर्शः। अन्यत्र गाढालिङ्गनदत्तगात्रसंवाहन इत्यर्थः । भवभूतिना चोक्तम्—"अशिथिलपरिरम्भैर्दत्तसंवाहनानि" इति ॥ संवाह्यन्ते च सुरतश्रान्ताः प्रियैर्युवतयः । एतत्कविरेव वक्ष्यति—"संभोगान्ते मम समुचितो हस्तसंवाहनानाम्" इति ॥ शिप्रा नाम काचित्तत्रत्या नदी तस्या वातः शिप्रावातः ॥ शिप्राग्रहणं शैत्यद्योतनार्थम् ॥ प्रार्थना सुरतस्य याञ्चा तत्र चाटु करोतीति तथोक्तः । पुनः सुरतार्थं प्रियवचनप्रयोक्तेत्यर्थः ॥ कर्मण्यण्प्रत्ययः ॥ प्रियतमो वल्लभ इव स्त्रीणां सुरतग्लानिं संभोगखेदं हरति। नुदति। चाटूक्तिभिर्विस्मृतपूर्वरतिखेदाः स्त्रियः प्रियतमप्रार्थनां सफलयन्तीति भावः ॥ "प्रार्थनाचाटुकारः" इत्यत्र "खण्डितनायिकानुनीता" इति व्याख्याने सुरतग्लानिहरणं न संभवति। तस्याः पूर्वं सुरताभावात्पश्चात्तनसुरतग्लानिहरणं तु नेदानीन्तनकोपशमनार्थचाटुवचनसाध्यमित्युत्प्रेक्षैवोचिता विवेकिनाम् ॥ "ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता" इति दशरूपके ॥ ३२ ॥

**अन्वयार्थः**—जिस स्थानमें प्रातःकालके विषे स्पष्ट और मदसे मनोहर सारसोंके शब्दोंसे बढाताहुआ खिले कमलोंकी सुगन्धिके संसर्गसे सुगन्धित अङ्गके अनुकूल शिप्रानदीका पवन प्रार्थनामें चतुर प्रियतमकी समान स्त्रियोंकी रतिग्लानिको हरता है ॥ ३२ ॥

**भावार्थः**—इस राजधानीके बीच, प्रातःकालमें प्रफुल्ल-कमल-परिमल-संसर्ग-सुरभि शरीरानुकूल स्पर्शसे सुख देनेवाला, शिप्रानदीके सहवाससे शीतल, मन्द मन्द गमनकारी गन्धवह-वायु; सारसपक्षियोंके स्पष्ट और अव्यक्त मधुर शब्दको विस्तरित करके सुरतकी प्रार्थनासे प्रियवचन कहनेमें निपुण, शरीर भीजनेवाले प्रेम-पात्र नायककी समान, पुरुषसंयोगसे उत्पन्न हुए स्त्रियोंके श्रमको हरण करता है। (वहांको तुम जाओ) ॥ ३२ ॥

जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः ।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखेदं नयेथा
लक्ष्मीं पश्यँल्ललितवनितापादरागाङ्कितेषु ॥ ३३ ॥

अन्वयः—जालोद्गीर्णैः केशसंस्कारधूपैः उपचितवपुः च बन्धुप्रीत्या भवनशिखिभिः दत्तनृत्योपहारः कुसुमसुरभिषु ललितवनितापादरागाङ्कितेषु हर्म्येषु अस्याः लक्ष्मीम् पश्यन् त्वम् अध्वखेदम् नयेथाः ॥ ३३ ॥

जालोद्गीर्णैरिति ॥ जालोद्गीर्णैर्गवाक्षमार्गनिर्गतैः ॥ "जालं गवाक्ष आनाये जालके कपटे गणे" इति यादवः ॥ केशसंस्कारधूपैः । वनिताकेशवासनार्थैर्गन्धद्रव्यधूपैरित्यर्थः ॥ अत्र संस्कारधूपयोस्तादर्थ्येऽपि यूपदार्वादिवत्प्रकृतिविकारत्वाभावादश्वघासादिवत्षष्ठीसमासो न चतुर्थीसमासः ॥ उपचितवपुः परिपुष्टशरीरः । बन्धौ बन्धुरिति वा प्रीत्या भवनशिखिभिर्गृहमयूरैर्दत्तो नृत्यमेवोपहार उपायनं यस्मै स तथोक्तः ॥ "उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः ॥ कुसुमैः सुरभिषु सुगन्धिषु ॥ ललितवनिताः सुन्दरस्त्रियः ॥ "ललितं त्रिषु सुन्दरम्" इति शब्दार्णवे ॥ तासां पादरागेण लाक्षारसेनाङ्कितेषु चिह्नितेषु हर्म्येषु धनिकभवनेष्वस्या उज्जयिन्या लक्ष्मीं पश्यन्नध्वनाध्वगमनेन खेदं क्लेशं नयेथा अपनय ॥ ३३ ॥

**अन्वयार्थः**–झरोखोंमेंसे निकलीहुई वालोंके संस्कारकी धूपोंसे पुष्टशरीरवाला, बन्धुकी प्रीतिसे घरके मोरोंसे नृत्यरूपी उपहार पानेवाला ( तू ) फूलोंकी सुगंधिवाले सुंदर स्त्रियोंके चरणरागसे चिन्हित महलोंमें इस उज्जयनीकी शोभा देखताहुआ; मार्गके खेदको दूर करना ॥ ३३ ॥

**भावार्थः**–हे पयोद ! तुम अनुपमरूपवती युवतियोंके चरणोंपर लगेहुए महावरके रससे अंकित, सुमन–समूहोंसे सुगन्धित हुई अटारियोंपर बैठकर विशाला राजधानीकी समृद्धि और सौभाग्यलक्ष्मीको देखते २ मार्गकी थकावटको दूर करना, इस समय झरोखोंके मार्गसे निकलीहुई अत्यन्त सुगन्धित धूपसे तुह्मारा शरीर पुष्ट होजायगा, घरोंमें पलाउ मोरगण बन्धु-प्रेमके वशमें पड तुमको नृत्यरूप उपहार देंगे ॥ ३३ ॥

भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य ।
धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ३४ ॥

अन्वयः—भर्तुः कण्ठच्छविः इति गणैः सादरं वीक्ष्यमाणः त्रिभुवनगुरोः चण्डीश्वरस्य पुण्यम् धाम यायाः कुवलयरजोगन्धिभिः तैः तोयक्रीडानिरतयुवतिस्नानतिक्तैः गन्धवत्याः मरुद्भिः धूतोद्यानम् ॥ ३४ ॥

भर्तुरिति ॥ भर्तुः स्वामिनो नीलकण्ठस्य भगवतः कण्ठस्येव छविर्यस्यासौ कण्ठच्छविरिति हेतोर्गणैः प्रमथैः ॥ "गणस्तु गणनायां स्याद्गणेशे प्रमथे चये" इति शब्दार्णवे ॥ सादरं यथा तथा वीक्ष्यमाणः सन् । प्रियवस्तुसादृश्यादतिप्रियत्वं भवेदिति भावः । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् ॥ "तद्धितार्थ—" इत्यादिना समासः ॥ तस्य गुरोस्त्रैलोक्यनाथस्य चण्डीश्वरस्य कात्यायनीवल्लभस्य पुण्यं पावनं धाम महाकालाख्यं स्थानं याया गच्छ ॥ विध्यर्थे लिङ् ॥ श्रेयस्करत्वात्सर्वथा यातव्यमिति भावः ॥ उक्तं च स्कान्दे—"आकाशे तारकं लिङ्गं पाताले हाटकेश्वरम् । मर्त्यलोके महाकालं दृष्ट्वा काममवाप्नुयात् ॥" इति ॥ न केवलं मुक्तिस्थानमिदं किंतु विलासस्थानमपीत्याह—धूतेति ॥ कुवलयरजोगन्धिभिरुत्पलपरागगन्धवद्भिस्तोयक्रीडासु निरतानामासक्तानां युवतीनां स्नानं स्नानीयं चन्दनादि ॥ करणे ल्युट् ॥ "स्नानीयेऽभिषवे स्नानम्" इति यादवः ॥ तेन तिक्तैः सुरभिभिः॥ "कटुतिक्तकषायास्तु सौरभे च प्रकीर्तिताः" इति हलायुधः ॥ सौगन्ध्यातिशयार्थं विशेषणद्वयम् । गन्धवत्या नाम नद्यास्तत्रत्याया मरुद्भिर्मारुतैर्धूतोद्यानं कम्पिताक्रीडमिति धाम्नो विशेषणम् ॥ ३४ ॥

**अन्वयार्थः**-क्या यह (यह) शिवजीके कण्ठकी छवि है इस प्रकार गणोंसे आदरपूर्वक देखाहुआ तीनों भवनके गुरू चण्डीश्वरके स्थान (महाकाल) कू जाना, कमलके परागकी गन्धिवाले उन जलक्रीडामें लगीहुई स्त्रियोंके स्नानकी सुगन्धिसे गन्धवती नदीकी पवनोंसे (जहांके) उद्यान कम्पित हैं ॥ ३४ ॥

भावार्थः-नीलवर्ण होनेसे श्रीशंकरजीके कंठसमान दीखनेके कारण, उनके दूतोंसे शंकर कहलाय आदरपूर्वक देखेजायकर, तुम उन त्रिलोकनाथ चण्डीश्वरके महाकालेश्वर नामक पवित्र स्थानको गमन करोगे (वह स्थान ऐसा है कि) जहांके उद्यान कमलरजकी सुगन्धिसे, व जलक्रीडाकरनेमें तत्पर तरुण स्त्रियोंके स्नान करनेसे सुवासित हुई गन्धवती नामक नदीके सन्मुखके शीतल पवनसे कंपायमान होते हैं॥ ३४॥

अप्यन्यस्मिञ्जलधर महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः।
कुर्वन्संध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम्॥३५॥

अन्वयः—हे जलधर! महाकालम् अन्यस्मिन्नपि काले आसाद्य यावत् भानुः नयनविषयम् अत्येति तावत् ते स्थातव्यम् शूलिनः श्लाघनीयाम् सन्ध्याबलिपटहताम् कुर्वन् त्वम् आमन्द्राणाम् गर्जितानाम् अविकलम् फलम्॥ ३५॥

अपीति॥ युग्मम्॥ हे जलधर, महाकालं नाम पूर्वोक्तं चण्डीश्वरस्थानमन्यस्मिन्सन्ध्यातिरिक्तेऽपि काल आसाद्य प्राप्य ते तव स्थातव्यम्। त्वया स्थातव्यमित्यर्थः॥ "कृत्यानां कर्तरि वा" इति षष्ठी॥ यावद्यावता कालेन भानुः सूर्यो नयनविषयं दृष्टिपथमत्येत्यतिक्रामति। अस्तमयकालपर्यन्तं स्थातव्यमित्यर्थः॥ यावदित्येतदवधारणार्थे। "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः॥ किमर्थमत आह—कुर्वन्निति॥ श्लाघनीयां प्रशस्यां शूलिनः शिवस्य संध्यायां बलिः पूजा तत्र पटहतां कुर्वन्संपादयन्नामन्द्राणामीषद्गम्भीराणां गर्जितानामविकलमखण्डं फलं लप्स्यते प्राप्स्यसि॥ लभेः कर्तरि लट्॥ महाकालनाथबलिपटहत्वेन विनियोगात्ते गर्जितसाफल्यं स्यादित्यर्थः॥

अन्वयार्थः-हे मेघ! महाकालकू (सन्ध्याके सिवाय) और समयमें प्राप्त हो तौ जबतक सूर्य न दीखै तबतक तुझे वहां रहना उचित है। शिवजीकी श्लाघा करने योग्य संध्यासमकी पूजाके बाजेके (शब्दोंकू) करताहुआ तू कुछ गंभीर गर्जनेके सम्पूर्ण फलको प्राप्त होगा॥ ३५॥

**भावार्थः**-हे जलधर ! उन महाकालेश्वरके मन्दिरमें सन्ध्याके अतिरिक्त जो किसी और समयपर पहुंचो, तो सूर्यके अस्त होनेतक वहां रहना । उस समय ऐसा होगा कि प्रदोषकालकी पूजाके समय, तुमकरके गर्जनारूप चौघडा वजनेकी श्रीमहाकालेश्वरकी स्तुति और सेवा वन पडेगी, तिसयोगसे तुम अपनी गंभीर गर्जनाका अखंड फल पाओगे ॥ ३५ ॥

**पादन्यासैः क्वणितरशनास्तत्र लीलावधूतै**
**रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।**
**वेश्यास्त्वत्तो नखपदसुखान्प्राप्य वर्षाग्रबिन्दू-**
**नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् ॥३६॥**

**अन्वयः**—तत्र पादन्यासक्वणितरशनाः लीलावधूतैः रत्नच्छायाखचितवलिभिः चामरैः क्लान्तहस्ताः वेश्याः त्वत्तः नखपदसुखान् वर्षाग्रबिन्दून् प्राप्य त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् आमोक्ष्यन्ते ॥ ३६ ॥

**पादन्यासैरिति** ॥ तत्र संध्याकाले ॥ पादन्यासैश्चरणनिक्षेपैर्नृत्याङ्गैः क्वणिताः शब्दायमाना रशना यासां तास्तथोक्ताः ॥ क्वणतेरकर्मकत्वात् "गत्यार्थाकर्मक–" इत्यादिना कर्तरि क्तः ॥ लीलया विलासेनावधूतैः कम्पितै रत्नानां कङ्कणमणीनां छायया कान्त्या खचिता रूषिता वलयश्चामरदण्डा येषां तैः ॥ "वलिश्चामरदण्डे च जराविश्लथचर्मणि" इति विश्वः ॥ चामरैर्वालव्यजनैः क्लान्तहस्ताः ॥ एतेन दैशिकं नृत्यं सूचितम् । तदुक्तं नृत्यसर्वस्वे—"खड्गकन्दुकवस्त्रादिदण्डिकाचामरस्रजः । वीणां च धृत्वा यत्कुर्युर्नृत्यं तद्दैशिकं भवेत् ॥" इति ॥ वेश्या महाकालनाथमुपेत्य नृत्यन्त्यो गणिकास्त्वत्तो नखपदेषु नखक्षतेषु सुखान्सुखकरान् ॥ "सुखहेतौ सुखे सुखम्" इति शब्दार्णवे ॥ वर्षस्याग्रबिन्दून्प्रथमबिन्दून्प्राप्य त्वयि मधुकरश्रेणिदीर्घान्कटाक्षानपाङ्गानामोक्ष्यन्ते । "परैरुपकृताः सन्तः सद्यः प्रत्युपकुर्वते" इति भावः । कामिनीदर्शनीयत्वलक्षणं शिवोपासनाफलं सद्यो लप्स्यस इति ध्वनिः ॥ ३६ ॥

**अन्वायार्थः**–तहां चरणोंके रखनेसे शब्दायमान, मेखलावाली लीलासे कंपाये हुए ( कंकणके ) मणियोंकी कान्तिसे खचित दं-

उचाले चामरोंकरके घिरे, हाथोंवाली वेश्या तुझसे नखक्षतोंमें सुखदेनेहारे बिन्दुओंको प्राप्त होकर, तुझमें भ्रमरपंक्तिसे बढेहुए कटाक्षोंको छोडेंगी ॥ ३६ ॥

भावार्थः—प्रति पग धरनेपर जिनकी तगडी मधुर शब्द करती है, हाथोंमें रत्नजडित कंगनोंकी कान्तिसे रत्नजडीसी दिखाई देनेवाली सुवर्णकी डंडीलगे पखोंके ( बीजनोंके ) लेनेसे जिनके हाथ थकगए हैं; ऐसी वाराङ्गनायें तुझसे;—उनके शरीरमें नखोंके क्षतोंको सुख देनेवाले प्रथम वर्षा-बिन्दुओंको प्राप्त होकर,-तुह्मारे प्रति भ्रमरपंक्तिके समान दीर्घ कटाक्ष छोडेंगी ॥ ३६ ॥

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ।
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥३७ ॥

**अन्वयः—पश्चात् नृत्यारम्भे प्रतिनवजपापुष्परक्तम् सान्ध्यम् तेजः दधानः त्वम् उच्चैः भुजतरुवनम् मंडलेन अभिलीनः भवान्या शान्तोद्वेगस्तिमितनयनम् दृष्टभक्तिः पशुपतेः आर्द्रनागाजिनेच्छाम् हर ॥ ३७ ॥**

**पश्चादिति** ॥ पश्चात्संध्याबल्यनन्तरं पशुपतेः शिवस्य नृत्यारम्भे ताण्डवप्रारम्भे प्रतिनवजपापुष्परक्तं प्रत्यग्रजपाकुसुमारुणं संध्यायां भवं सान्ध्यं तेजो दधानः । उच्चैरुन्नतं भुजा एव तरवस्तेषां वनं मण्डलेन मण्डलाकारेणाभिलीनोऽभिव्याप्तः सन् ॥ कर्तरि क्तः ॥ भवान्या भवपत्न्या ॥ "इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्" इति ङीष् । आनुगागमश्च ॥ शान्त उद्वेगो गजाजिनदर्शनभयं ययोस्ते अत एव स्तिमिते निश्चले नयने यस्मिन्कर्मणि तत्तथोक्तम् ॥ "उद्वेगस्त्वरिते क्लेशे भये मन्थरगामिनि" इति शब्दार्णवे ॥ भक्तिः पूज्येष्वनुरागः ॥ भावार्थे क्तिन्प्रत्ययः ॥ दृष्टा भक्तिर्यस्य स दृष्टभक्तिः सन् । पशुपतेरार्द्रं शोणितार्द्रं यन्नागाजिनं गजचर्म ॥ "अजिनं चर्म कृत्तिः स्त्री" इत्यमरः ॥ तत्रेच्छां हर निवर्तय । त्वमेव तत्स्थाने भवेत्यर्थः । गजासुरमर्दनानन्तरं भगवान्महादेवस्तदीयमार्द्राजिनं भुजमण्डलेन बिभ्रत्ताण्डवं चकारेति प्रसिद्धिः ॥

दृष्टभक्तिरिति कथं रूपसिद्धिः । दृष्टशब्दस्य "स्त्रियाः पुंवत्-" इत्यादिना पुंवद्भावस्य दुर्घटत्वादपूरणीप्रियादिष्विति निषेधात् । भक्तिशब्दस्य प्रियादिषु पाठादिति । तदेतच्चोद्यम् । दृढभक्तिरिति शब्दमाश्रित्य प्रतिविहितं गणव्याख्याने दृढं भक्तिरस्येति नपुंसकं पूर्वपदम् । अदाढर्यनिवृत्तिपरत्वे दृढशब्दाल्लिङ्गविशेषस्यानुपकारित्वात्स्त्रीत्वमविवक्षितमिति ॥ भोजराजस्तु—"भक्तौ च कर्मसाधनायामित्यनेन सूत्रेण भज्यते सेव्यत इति कर्मार्थत्वे भवानीभक्तिरित्यादि भवति । भावसाधनायां तु स्थिरभक्तिर्भवान्यामित्यादि भवति" इत्याह । तदेतत्सर्वं सम्यग्विवेचितं रघुवंशसंजीविन्यां "दृढभक्तिरिति ज्येष्ठे" इत्यत्र । तस्माद्दृढभक्तिरित्यत्रापि मतभेदेन पूर्वपदस्य स्त्रीत्वेन नपुंसकत्वेन च रूपसिद्धिरस्तीति स्थितम् ॥ ३७ ॥

**अन्वयार्थः**-पीछे नृत्यके आरंभमें नवीन जपाके फूलकी समान लाल, सन्ध्यासम्बन्धी तेजको धारण करताहुआ तू ( महादेवजीके ) अति ऊंचे भुजारूपी वृक्षोंके वनको मंडलाकारसे विलीन होता हुआ, पार्वतीजीसे उद्वेगरहित और निश्चलनेत्रसे देखाहुआ भक्तिका दिखानेवाला तू महादेवजीके गीले गजचर्म परिधान करनेकी इच्छाको अपने योगसे पूर्ण कर ॥ ३७ ॥

**भावार्थः**-सन्ध्याकालीन पूजाके समाप्त होनेपर जब महाकालेश्वरका नृत्य आरंभ होगा, तब तुम अग्रभागमें जपाकुसुमकी समान लालवर्णके संध्या-रागको धारण करके उन ( महादेवजी ) के अति ऊँचे भुजारूपी वृक्षोंके वनको मंडलाकारसे छाय, पहले उन ( महादेवजी ) की रुधिरसे गीले गजचर्मके ओढनेकी इच्छाको पूर्ण करना । अर्थात् तुमहीं गजचर्मकी समान बन जइयो । उस समय भगवती भवानीजी उद्वेगरहित हो तुह्मारी भक्तिको देखेंगी ॥ ३७ ॥

इत्थं महाकालनाथस्य सेवाप्रकारमभिधाय पुनरपि नगरसंचारप्रकारमाह—

**गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं**
**रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ।**
**सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वीं**
**तोयोत्सर्गस्तनितमुखरो मा स्म भूर्विक्लवास्ताः ॥ ३८॥**

अन्वयः—तत्र नक्तम् रमणवसतिम् गच्छन्तीनाम् योषिताम् सूचीभेद्यैः तमोभिः रुद्धालोके नरपतिपथे कनकनिकषस्निग्धया सौदामिन्या उर्वीम् दर्शय ( च ) तोयोत्सर्गस्तनितमुखरः मा स्म भूः [ यतः ] ताः विक्लवाः सन्ति ॥ ३८ ॥

गच्छन्तीनामिति ॥ तत्रोज्जयिन्यां नक्तं रात्रौ रमणवसतिं प्रियभवनं प्रति गच्छन्तीनां योषिताम् । अभिसारिकाणामित्यर्थः । सूचिभिद्यैः । अतिनिबिडैरित्यर्थः । तमोभी रुद्धालोके निरुद्धदृष्टिप्रसारे नरपतिपथे राजमार्गे कनकस्य निकषो निकष्यतेऽनेन इति व्युत्पत्त्या निकष उपलगतरेखा तद्वत् स्निग्धं तेजो यस्यास्तया ॥ "स्निग्धं तु मसृणे सान्द्रे रम्ये क्लीबे च तेजसि" इति शब्दार्णवे ॥ सुदाम्नाद्रिणैकदिक् सौदामनी विद्युत् ॥ "तेनैकदिक्" इत्यण्प्रत्ययः ॥ तयोर्वीं मार्गं दर्शय । किंच तोयोत्सर्गस्तनिताभ्यां वृष्टिगर्जिताभ्यां मुखरः शब्दायमानो मा स्म भूः । कुतः । ता योषितो विक्लवा भीरवः । ततो वृष्टिगर्जिते न कार्ये इत्यर्थः ॥ नात्र तोयोत्सर्गसहितं स्तनितमिति विग्रहः । विशिष्टस्यैव केवलस्तनितस्याप्यनिष्टत्वात् । न च द्वन्द्वपक्षेऽल्पाच्तरपूर्वनिपातशास्त्रविरोधः । "लक्षणहेत्वोः क्रियायाः" इति सूत्र एव विपरीतनिर्देशेन पूर्वनिपातशास्त्रस्यानित्यत्वज्ञापनादिति ॥३८॥

अन्वयार्थः–तहां रात्रिमें कान्तोंके स्थानको जातीहुई स्त्रियोंको सूचीभेद्य ( अतिघन ) अंधकारोंसे प्रकाश नष्ट होनेसे राजमार्गमें सुवर्ण कसौटीकी समान तेजवाली बिजलीकरकै पृथ्वीको दिखाना और वर्षा व गर्जनाके शब्दवाला मतहोना ( क्योंकि ) वे स्त्रियें डरपोक हैं ॥ ३८ ॥

भावार्थः–इस उज्जयिनी नगरीमें घोररात्रिके समय निबिड अंधकारसे जब राजमार्ग ढक जायगा, और जब अभिसारिका स्त्रियें अपने प्यारोंके वासस्थानपर जांयगी उस समय तुम कसौटीपर लगीहुई सुवर्ण–रेखाकी समान प्रकाशमान विद्युल्लतासे उनको मार्ग दिखातेरहना । परन्तु उस समय न जल वर्षाइयो न गर्जियो, क्योंकि अभिसारमें लगी वह सुकुमारि स्त्रियें अत्यन्त भीरु हैं ॥३८॥

तां कस्यांचिद्भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात्खिन्नविद्युत्कलत्रः ।
दृष्टे सूर्ये पुनरपि भवान्वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ३९॥

**अन्वयः**—चिरविलसनात् खिन्नविद्युत्कलत्रः भवान् सुप्तपारावतायाम् कस्याञ्चित् भवनवलभौ ताम् रात्रिम् नीत्वा सूर्ये दृष्टे पुनरपि अध्वशेषम् वाहयेत् [ तथाहि ] सुहृदाम् अभ्युपेतार्थकृत्याः [ जनाः ] न मन्दायन्ते खलु ॥ ३९ ॥

**तामिति** ॥ चिरं विलसनात्स्फुरणात्खिन्नं विद्युदेव कलत्रं यस्य स भवान्सुप्ताः पारावताः कलरवा यस्यां तस्याम् । विविक्तायामित्यर्थः ॥ "पारावतः कलरवः कपोतः" इत्यमरः ॥ जनसंचारस्तत्रासंभावित एवेति भावः । कस्यांचिद्भवनवलभौ । गृहाच्छादनोपरिभाग इत्यर्थः ॥ "आच्छादनं स्याद्वलभी गृहाणाम्" इति हलायुधः ॥ तां रात्रिं नीत्वा सूर्ये दृष्टे सति । उदिते सतीत्यर्थः । पुनरप्यध्वशेषं वाहयेत् । तथाहि सुहृदां मित्राणामभ्युपेताङ्गीकृतार्थस्य प्रयोजनस्य कृत्या क्रिया यैस्ते अभ्युपेतसुहृदर्था इत्यर्थः ॥ सापेक्षत्वेऽपि गमकत्वात्समासः ॥ "कृत्या क्रियादेवतयोः कार्ये स्त्री कुपिते त्रिषु" इति यादवः ॥ "कृञः श च" इति चकारात्क्यप् ॥ न मन्दायन्ते खलु न मन्दा भवन्ति हि । न विलम्बन्त इत्यर्थः ॥ "लोहितादिडाज्भ्यः क्यष्" इति क्यष् । "वा क्यषः" इत्यात्मनेपदम् ॥ ३९ ॥

**अन्वयार्थः**-बहुतकाल स्फुरायमान होनेसे व्याकुल विजलीरूपी स्त्रीवाला तू सोयेहुए कबूतरोंवाले किसी गृहाच्छादनके उपरि भागमें उस रात्रिको बिताकर सूर्यके दर्शन होनेपर फिरभी शेष मार्गकू जाना ( कारणकि ) मित्रोंके स्वीकार किये कार्यके प्रयोजनवाले ( मनुष्य ) निश्चयही आलसी नहीं होते हैं ॥ ३९ ॥

**भावार्थः**-हे नीरद ! तुह्मारी सौदामिनी ( विजली ) इस रात्रिमें बहुतदेर चमकनेसे थकजायगी, इसलिये तुम ऐसी सूनसान अटारीपर जहां कि कबूतर सो रहेहों, उस रात्रिको बिताना । फिर सूर्योदय होनेपर शेष रहे मार्गको काटना । कारण कि जिन्होंने मित्रोंका

कार्य सिद्ध करनेकी प्रतिज्ञा की है, और उस कार्यको करने लगे हैं, वह लोग कभी अपने यत्नको शिथिल नहीं होने देते ॥ ३९ ॥

तस्मिन्काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ।
प्रालेयास्रं कमलवदनात्सोऽपि हर्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥ ४० ॥

अन्वयः—तस्मिन् काले प्रणयिभिः खण्डितानाम् योषिताम् नयनसलिलम् शान्तिम् नेयम् अतः भानोः वर्त्म आशु त्यज सः अपि नलिन्याः कमलवदनात् प्रालेयास्रम् हर्तुम् प्रत्यावृत्तः [भविष्यति ततः] त्वयि कररुधि अनल्पाभ्यसूयः स्यात् ॥ ४० ॥

तस्मिन्निति ॥ तस्मिन्काले पूर्वोक्ते सूर्योदयकाले प्रणयिभिः प्रियतमैः खण्डितानां योषितां नायिकाविशेषाणाम् ॥ "ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता" इति दशरूपके ॥ नयनसलिलं शान्तिं नेयं नेतव्यम् ॥ नयतिर्द्विकर्मकः ॥ अतो हेतोर्भानोर्वर्त्माशु शीघ्रं त्यज । तस्यावरको मा भूरित्यर्थः ॥ विपक्षेऽनिष्टमाचष्टे—सोऽपि भानुः । नलान्यम्बुजानि यस्याः सन्तीति नलिनी पद्मिनी ॥ "तृणेऽब्जे नलं ना तु राज्ञि नाले तु न स्त्रियाम्" इति शब्दार्णवे ॥ तस्याः स्वकान्तायाः कमलं स्वकुसुममेव वदनं तस्मात्प्रालेयं हिममेवास्रमश्रु हर्तुं शमयितुं प्रत्यावृत्तः प्रत्यागतः । नलिन्याश्च भर्तुर्भानोर्देशान्तरे नलिन्यन्तरगमनात्खण्डितात्वमित्याशयः । ततस्त्वयि । करान्रश्मीन्रुणद्धीति कररुत् । क्विप् । तस्मिन्कररुधि सति । हस्तरोधिनि सतीति च गम्यते ॥ "बलिहस्तांशवः कराः" इत्यमरः ॥ अनल्पाभ्यसूयोऽधिकविद्वेषः स्यात् । प्रायेणेच्छाविशेषविघाताद्द्वेषो रोषविशेषश्च कामिनां भवतीति भावः । किं च "आत्मानं चार्कमीशानं विष्णुं वा द्वेष्टि यो जनः । श्रेयांसि तस्य नश्यन्ति रौरवं च भवेद्ध्रुवम्॥" इति निषेधात्कार्यहानिर्भविष्यतीति ध्वनिः ॥४०॥

**अन्वयार्थः**—उससमय प्रियतमोंकरके रतिखंडित ( जिस स्त्रीका पति अन्यस्त्री भोगकर प्रातःकाल अपनी स्त्रीके निकट आया हो वह स्त्री ) स्त्रियोंके नेत्रोंके जलकू शान्तिको प्राप्त करना उचित है, इसी कारण सूर्यके मार्गको शीघ्र त्यागना, वह सूर्यभी कमलिनीके

कमलरूपी मुख हिमसम्बन्धी जल हरण करनेकू आगमन करनेवाला ( इसकारण ) होगा तुझमें किरणोंके रुकनेसे अधिक द्वेषवाला होगा ॥ ४० ॥

**भावार्थः**—हे जलद ! इस सूर्योदयके समय प्रेम-प्रवीण नायकगण खण्डितानायकाओंके (स्त्रीके भोग करनेके चिन्होंसे चिन्हित निकट आये हुए प्यारेके देखनेसे दाहकेमारे शोकाकुल स्त्रीयेंाके ) आंसुवोंको पोंछेंगे इसकारण तुम उससमय सूर्यको न रोककर उन ( सूर्यका ) मार्ग छोडदेना । कारण कि वह ( सूर्य ) भी प्रेमपात्री नलिनीके कमलवदनसे प्रलयकारी गिरता हुआ नेत्रजल दूर करनेके लिये जांयगे । जो उस समय तुम उनका हाथ पकडोगे तो तुह्मारे प्रति उनका सम्पूर्ण रोष और द्वेष उत्पन्न होगा ॥ ४० ॥

**गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने**
**छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ।**
**तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्या-**
**न्मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि ॥ ४१ ॥**

**अन्वयः**—गम्भीरायाः सरितः चेतसीव प्रसन्ने पयसि प्रकृतिसुभगः ते, छायात्मापि प्रवेशम् लप्स्यते तस्मात् अस्याः कुमुदविशदानि चटुलशफरोद्वर्त्तनप्रेक्षितानि धैर्यात् मोघीकर्तुम् त्वम् नार्हसि ॥ ४१ ॥

**गम्भीराया इति** ॥ गम्भीरा नाम सरित्॥ उदात्तनायिका च ध्वन्यते ॥ तस्याः प्रसन्नेऽनुरक्तत्वाद्दोषरहिते चेतसीव प्रसन्नेऽतिनिर्मले पयसि । प्रकृत्याः स्वभावेनैव सुभगः सुन्दरः॥ "सुन्दरेऽधिकभाग्ये च दुर्दिनेतरवासरे । तुरीयांशे श्रीमति च सुभगः" इति शब्दार्णवे॥ ते तव छाया चासावात्मा च । सोऽपि प्रतिबिम्बशरीरं च प्रवेशं लप्स्यते । अपिशब्दात्प्रवेशमनिच्छोरपीति भावः । तस्माच्छायाद्वारापि प्रवेशादवश्यंभावित्वादस्या गम्भीरायाः । कुमुदवद्विशदानि धवलानि चटुलानि शीघ्राणि शफराणां मीनानामुद्वर्तनान्युल्लुण्ठनान्येव प्रेक्षितान्यवलोकनानि ॥ "त्रिषु स्याच्चटुलं शीघ्रम्" इति विश्वः ॥ एतावदेव गम्भीराया अनुरागलिङ्गम् । धैर्याद्धार्ष्ट्यात् । वैयात्यादिति यावत् । मोघीकर्तुं विफ-

लोकर्तुं नार्हसि । नानुरक्ता विप्रलम्भव्येत्यर्थः ॥ धूर्तलक्षणं तु—"क्लि-श्नाति नित्यं गमितां कामिनीमिति सुन्दरः । उपेत्यरक्तां यत्नेन रक्तां धूर्तो विमुञ्चति ॥" इति ॥ ४१ ॥

अन्वयार्थः–गंभीरा नदीके चित्तकीनाई निर्मल जलमें स्वभाव-सेही सुन्दर तेरी छाया आत्माभी प्रवेशकू प्राप्त होगी, इस कारण इस नदीके वनलेकी समान श्वेत चंचल मछलियोंके कूदने अवलो-कनोंकू धृष्टतासे विफल करनेको तू योग्य नहीं है ॥ ४१ ॥

भावार्थः—हे जलधर ! तुह्मारा प्रकृतिसुन्दर छायाशरीर गम्भी-रा नदीके प्रसन्न हृदयस्वरूप स्वच्छ जलमें निःसन्देह प्रवेश करेगा । इसलिये अनुरागके वशमें पडी सकामा इस नदीकी फूलसमान विशद चन्द्रविकाशी कमलोंकी समान मत्स्योद्वर्त्तनरूप प्रेमावलो-कन; धूर्तपनेसे विफल करनेके योग्य तुम नहीं हो । अर्थात् तुम उनको झूठा धीरज न बधाना, कारण कि अनुरागिनी स्त्रियें फँसाने-के योग्य नहीं हैं ॥ ४१ ॥

**तस्याः किंचित्करधृतमिव प्राप्तवानीरशाखं**
**हृत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम् ।**
**प्रस्थानं ते कथमपि सखे लम्बमानस्य भावि**
**ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः ॥ ४२॥**

अन्वयः—हे सखे प्राप्तवानीरशाखम् [ अतएव ] किञ्चित् करधृतमिव मुक्तरोधोनितम्बम् नीलम् तस्याः सलिलवसनम् हृत्वा लम्बमानस्य ते प्रस्थानम् कथमपि भावि ज्ञातास्वादः कः [ पुमान् ] विवृतजघनाम् विहातुम् समर्थः स्यात् ॥ ४२ ॥

**तस्या इति** ॥ हे सखे, प्राप्ता वानीरशाखा वेतसशाखा येन तत्तथो-क्तमतएव किंचिदीषत्करधृतं हस्तावलम्बितमिव स्थितम् । मुक्तस्त्यक्तो रोधस्तटमेव नितम्बः कटिर्येन तत्तथोक्तम् ॥ "नितम्बः पश्चिमे श्रोणि-भागेऽद्रिकटके कटौ" इति यादवः ॥ नीलं कृष्णवर्णं तस्या गम्भी-रायाः सलिलमेव वसनं नीत्वापनीय ॥ प्रस्थानसमये प्रेयसीवसनग्रहणं विरहतापविनोदनार्थमिति प्रसिद्धम् ॥ लम्बमानस्य पीतसलिलभराल्ल-म्बमानस्य । अन्यत्र जघनारूढस्य । ते तव प्रस्थानं प्रयाणं कथमपि

कृच्छ्रेण भावि ॥ कृच्छ्रत्वे हेतुमाह—ज्ञातेति ॥ ज्ञातास्वादोऽनुभूतरसः कः पुमान्विवृतं प्रकटीकृतं जघनं कटिस्तत्पूर्वभागो वा यस्यास्ताम् ॥ "जघनं स्यात्कटौ पूर्वश्रोणिभागापरांशयोः" इति यादवः ॥ विहातु त्यक्तुं समर्थः । न कोऽपीत्यर्थः ॥ ४२ ॥

**अन्वयार्थः**—हे सखे ! बेंतकी शाखा जलमें झुकी रहनेसे हाथमें धारण कियेकी समान पुलिनरूपी नितम्बसे कुछेक खसके हुए व नीले उस नदीके जलरूपी वस्त्रको लेकर लम्बायमान हुए तेरा प्रस्थान कठिनतासे होगा; क्योंकि इसका अनुभव कर कौन पुरुष प्रगट जांघवाली स्त्रीके त्यागनेको समर्थ होता है ॥ ४२ ॥

**भावार्थः**—हे वारिवाह ! तुम इस गंभीरानदीका निर्मल-सलिलरूप नीला वस्त्र हर लोगे, बेंतकी शाखा जलमें झुकी रहनेसे ऐसे जानपडेगा कि मानो वह लाजके मारे पुलिनरूपी नितम्बसे खसके हुए वस्त्रको कुछएक पकड रही है। तुम यदि एकवारभी उस सर्वाङ्गसुन्दरी सागरविलासिनीके ऊपर फैलजाओगे, तो फिर उस स्थानसे तुह्मारा जाना अति कठिन हो जायगा। क्यों कि शृंङ्गाररसके स्वादका जाननेवाला कौन पुरुष विलासिनी स्त्रीका त्याग करनेमें समर्थ होगा ? अर्थात् कोई समर्थ नहीं होगा ॥ ४२ ॥

त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसंपर्करम्यः
स्रोतोरन्ध्रध्वनितसुभगं दन्तिभिः पीयमानः ।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वायुः परिणमयिता काननोदुम्बराणाम् ॥ ४३ ॥

**अन्वयः**—त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः स्रोतोरन्ध्रध्वनितसुभगम् दन्तिभिः पीयमानः काननोदुम्वराणाम् परिणमयिता शीतः वायुः देवपूर्वम् गिरिम् उपजिगमिषोः ते नीचैः वास्यति ॥ ४३ ॥

**त्वदिति** ॥ त्वन्निष्यन्देन तव वृष्ट्योच्छ्वसिताया उपबृंहिताया वसुधाया भूमेर्गन्धस्य संपर्केण रम्यः । सुरभिरित्यर्थः ॥ स्रोत-शब्देनेन्द्रियवाचिना तद्विशेषो घ्राणं लक्ष्यते ॥ "स्रोतोऽम्बुवेगेन्द्रिययोः" इत्यमरः ॥ स्रोतोरन्ध्रेषु नासाग्रकुहरेषु यद्ध्वनितं शब्दस्तेन सुभगं

यथा तथा दन्तिभिर्गजैः पीयमानः । वसुधागन्धलोभादाघ्रायमाण इ-त्यर्थः । अनेन मान्द्यमुच्यते । काननेषु वनेषूदुम्बराणां जन्तुफलनाम् ॥ "उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः" इत्यमरः ॥ परिणमयिता परिपाकयिता ॥ "मितां ह्रस्वः" इति ह्रस्वः ॥ शीतो वायुः । देवपूर्वं देवशब्दपूर्वं गिरिम् । देवगिरिमित्यर्थः । उपजिगमिषोरुपगन्तुमिच्छोः ॥ गमेः सन्नन्तादुप्रत्ययः ॥ ते तव नीचैः शनैर्वास्यति । त्वां वीजयिष्यतीत्यर्थः ॥ संबन्धमात्रविवक्षायां षष्ठी ॥ "देवपूर्वं गिरिम्" इत्यत्र देवपूर्वत्वं गिरिशब्दस्य । न तु संज्ञितस्तदर्थस्येति । संज्ञायाः संज्ञित्वाभावादवाच्यवचनं दोषमाहुरालंकारिकाः । तदुक्तमेकावल्याम्—"यदवाच्यस्य वचनमवाच्यवचनं हि तत्" इति ॥ समाधानं तु देवशब्दविशेषितेन गिरिशब्देन शब्दपरेण मेघोपगमनयोग्यो देवगिरिर्लक्ष्यत इति कथंचित्संपाद्यम् ॥ ४३ ॥

**अन्वयार्थः**-तेरी वर्षा स्वांस लेनेवाली पृथ्वीकी गंधके सम्बन्धसे मनोहर नासारंध्रके शब्दसे सुन्दर हाथियोंसे पियाहुआ वनमे उदुम्बर फलोंका पकानेहारा शीतल पवन देवशब्द पूर्व है जिसके ऐसे पर्वतकू जानेकी इच्छा करनेवाले तुझें शनैः वीजन करेगा ।४३।

**भावार्थः**—हे सखे! अनन्तर तुम देवगिरि पर्वतपर जाओगे, तब तुह्मारे जलवर्षानेसे आनंदोच्छ्वास फैलानेवाला पृथ्वीकी गन्धसे सुवासित, मातङ्गोंके द्वारा शुण्डके छेदोंसे रमणीक शब्दके साथ सूंघाजाताहुआ, वनेले उदुम्बर फलका पकानेवाला शीतल पवन तुह्मारी सेवा करेगा ॥ ४३ ॥

तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान्व्योमगङ्गाजलार्द्रैः ।
रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः ॥ ४४ ॥

**अन्वयः**—तत्र नियतवसतिम् स्कन्दम् पुष्पमेघीकृतात्मा व्योमगङ्गाजलार्द्रैः पुष्पासारैः भवान् स्नपयतु वासवीनाम् चमूनाम् रक्षाहेतोः नवशशिभृता हुतवहमुखे सम्भृतम् अत्यादित्यम् तत् तेजः हि ॥ ४४ ॥

**तत्रेति** ॥ तत्र देवगिरौ नियता वसतिर्यस्य तम्। नित्यसंनिहितमित्यर्थः ॥ पुरा किल तारकाख्यासुरविजयसंतुष्टः सुरप्रार्थनावशाद्भगवान्भवानीनन्दनः स्कन्दो नित्यमहमिह सह शिवाभ्यां वसामीत्युक्त्वा तत्र वसतीति प्रसिद्धिः ॥ स्कन्दं कुमारं स्वामिनम्। पुष्पाणां मेघः पुष्पमेघः । पुष्पमेघीकृतात्मा कामरूपत्वात्पुष्पवर्षुकमेघीकृतविग्रहः सन्व्योमगङ्गाजलार्द्रैः। पुष्पासारैः पुष्पसंपातैः ॥ "धारासंपात आसारः" इत्यमरः ॥ भवान्स्वयमेव स्नपयत्वभिषिञ्चतु । स्वयंपूजाया उत्तमत्वादिति भावः ॥ तथा च शंभुरहस्ये—"स्वयं यजति चेद्देवमुत्तमा सोदरात्मजैः। मध्यमा या यजेद्भृत्यैरधमा याजनक्रिया॥" इति ॥ स्कान्दस्य पूज्यत्वसमर्थनेनार्थनार्थान्तरं न्यस्यति—रक्षेति ॥ तद्भगवान्। स्कन्द इत्यर्थः ॥ विधेयप्राधान्यान्नपुंसकनिर्देशः ॥ वासवस्येमा वासव्यः ॥ "तस्येदम्" इत्यण् ॥ तासां वासवीनामैन्द्रीणां चमूनां सेनानां रक्षाहेतो रक्षया कारणेन। रक्षार्थमित्यर्थः ॥ "षष्ठी हेतुप्रयोगे" इति षष्ठी ॥ नवशशिभृता भगवता चन्द्रशेखरेण । वहतीति वहः ॥ पचाद्यच् ॥ हुतस्य वहो हुतवहो वह्निस्तस्य मुखे संभृतं संचितम्। आदित्यमतिक्रान्तमत्यादित्यम् ॥ "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः ॥ तेजो हि साक्षाद्भगवतो हरस्यैव मूर्त्यन्तरमित्यर्थः। अतः पूज्यमिति भावः। मुखग्रहणं तु शुद्धत्वसूचनार्थम् । तदुक्तं शंभुरहस्ये—"गवां पश्चाद्द्विजस्याङ्घ्रियोगिनां त्वक्कवेर्वचः । परं शुचितमं विद्यान्मुखं स्त्रीवह्निवाजिनाम् ॥" इति ॥ ४४ ॥

**अन्वयार्थः**–उस देवगिरिमें सदा वसनेहारे स्कन्दकू पुष्पोंका वर्षनेवाला होकर आकाशगंगाके जलसे गीली फूलोंकी धारासे तू स्वयं स्नान कराना इन्द्रसम्बन्धी सैनाओंके रक्षानिमित्त नवीन चंद्रमा धारण करनेहारे ( चंद्रशेखर करके ) अग्निके मुखमें रक्खा हुआ सूर्यका अतिक्रमण करनेहारा वह तेज है ॥ ४४ ॥

**भावार्थः**—इस देवगिरिपर शिवकुमार कार्त्तिकेय सदाही वास किया करते हैं। तू कामरूपी है; अतएव इस स्थानमें पुष्पमेघ–रूप धारण करके मन्दाकिनीके जलसे भीगेहुए फूल वर्षाय उन भवानी-

नन्दनका अभिषेक करना । भगवान भवानीपति श्रीमहादेवजीने इन्द्रकी सेनाकी रक्षा करनेके लिये जो तेज अत्यादित्य अर्थात् आदित्यसेभी अधिकश्रेष्ट अग्निके मुखमें होम दियाथा । उसी तेजसे इन महातेजस्वी देव-सेनापतिकी उत्पत्ति हुई है ॥ ४४ ॥

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति ।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥ ४५ ॥

अन्वयः—ज्योतिर्लेखावलयि गलितम् यस्य बर्हम् भवानी पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति तम् हरशशिरुचा धौतापाङ्गम् पावकेः मयूरम् पश्चात् अद्रिग्रहणगुरुभिः गर्जितैः त्वम् नर्तयेथाः ॥ ४५ ॥

ज्योतिरिति ॥ ज्योतिषस्तेजसो लेखा राजयस्तासां वलयं मण्डलं यस्यास्तीति तथोक्तम् । गलितं भ्रष्टम् । न तु लौल्यात्स्वयं छिन्नमिति भावः । यस्य मयूरस्य बर्हं पिच्छम् । "पिच्छबर्हे नपुंसके" इत्यमरः ॥ भवानी गौरी । पुत्रप्रेम्णा पुत्रस्नेहेन कुवलयस्य दलं पत्रं तत्प्रापि तद्योगि यथा तथा कर्णे करोति । दलेन सह धारयतीत्यर्थः । यद्वा कुवलयस्य दलप्रापि दलभाजि दलार्हे कर्णे करोति ॥ क्विबन्तात्सप्तमी ॥ दलं परित्यज्य तत्स्थाने बर्हं धत्त इत्यर्थः ॥ नाथस्तु "कुवलयदलक्षेपि" इति पाठमनुसृत्य "क्षेपो निन्दापसारणं वा" इति व्याख्यातवान् ॥ हरशशिरुचा हरशिरश्चन्द्रिकया धौतापाङ्गं स्वतोऽपि शौक्ल्यादतिधवलितनेत्रान्तम् ॥ "अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः ॥ पावकस्याग्नेरपत्यं पावकिः स्कन्दः ॥ "अत इञ्" इति इञ् ॥ तस्य तं पूर्वोक्तं मयूरं पश्चात्पुष्पाभिषेचनानन्तरमद्रेर्देवगिरेः कर्तुः ॥ ग्रहणेन गुहासंक्रमणेन गुरुभिः । प्रतिध्वानमहद्भिरित्यर्थः । गर्जितैर्नर्तयेथा नृत्यं कारय । मार्दङ्गिकभावेन भगवन्तं कुमारमुपासस्वेति भावः ॥ "नर्तयेथाः" इत्यत्र "अणावकर्मकाच्चित्तवत्कर्तृकात्" इत्यात्मनेपदापवादः । "निगरणचलनार्थेभ्यश्च" इति परस्मैपदं न भवति तस्य "न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः" इति प्रतिषेधात् ॥ ४५ ॥

**अन्वयार्थः**—तेजकी रेखाओंके मंडलमें गिरेहुए जिस मोरके पिच्छकू पार्वती पुत्रके प्रेमसे कमलपखुरीके प्राप्त करनेवाले कानमें धारण करती है, उस शिवजीके चंद्रमाकी कान्तिसे स्वच्छनेत्रोंके प्रान्तवाले स्वामिकार्तिकके मोरकू पुष्पअभिषेकके अनन्तर देवगिरिकी गुहाओंमें प्रवेशसे वढेहुए गर्जनेके शब्दोंकरके तू नृत्य कराना ॥ ४५ ॥

**भावार्थः**—जब तुम इस प्रकारसे पुष्पवर्षण करोगे, तब अत्यन्त देदीप्यमान दिखाई देनेवाले स्वयम् गिरेहुए मोरके पंख;—पार्वतीजी पुत्रस्नेहके वश हो, कानमें पहरेहुए कमलदलको निकाल उनके स्थानमें धारण करेंगी; व जिसके नेत्रोंकी कोर महादेवजीके शिरपर विराजमान चन्द्रमाकी कलासे अधिक श्वेत हुई है, उन स्वामिकार्तिकजीके मोरको; पर्वतकी गुफामें प्रतिध्वनित होनेसे अति बडे निज गर्जनेसे नचाना ॥ ४५ ॥

**आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा**
**सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ।**
**व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्य-**
**न्स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥४६॥**

**अन्वयः**—एनम् शरवणभवम् देवम् आराध्य वीणिभिः सिद्धद्वन्द्वैः जलकणभयात् मुक्तमार्गः उल्लंघिताध्वा त्वम् सुरभितनयालम्बजाम् भुवि स्रोतोमूर्त्या परिणताम् रन्तिदेवस्य कीर्तिम् मानयिष्यन् व्यालम्बेथाः ॥ ४६ ॥

**आराध्येति** ॥ एनं पूर्वोक्तं शरा बाणतृणानि ॥ "शरो बाणे बाणतृणे" इति शब्दार्णवे ॥ तेषां वनं शरवणम् ॥ "प्रनिरन्तःशरे–" इत्यादिना णत्वम् ॥ तत्र भवो जन्म यस्य तं शरवणभवम् ॥ "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः" इति वामनः । अवर्ज्योऽगतिकत्वादाश्रयणीय इत्यर्थः ॥ देवं स्कन्दम् ॥ "शरजन्मा षडाननः" इत्यमरः ॥ आराध्योपास्य वीणिभिर्वीणावद्भिः ॥ व्रीह्यादित्वादिनिः ॥ सिद्धद्वन्द्वैः सिद्धमिथुनैः । भगवन्तं स्कन्दमुपवीणयितुमागतैरिति भावः । जलकणभयात् । जलसेकस्य

वीणाक्वणनमनिवन्धकत्वादिति भावः । मुक्तमार्गस्त्यक्तवर्त्मा सन्नुल्लङ्घिताध्वा । किंचित्तमध्वानं गत इत्यर्थः । सुरभितनयानां गवामालम्भेन संज्ञपनेन जायत इति तथोक्ताम् । भुवि लोके स्रोतोमूर्त्या प्रवाहरूपेण परिणतां रूपविशेषमापन्नां रन्तिदेवस्य दशपुरपतेर्महाराजस्य कीर्तिम् । चर्मण्वत्याख्यां नदीमित्यर्थः । मानयिष्यन्सत्कारयिष्यन्व्यालम्बेथाः । आलम्ब्यावतरेरित्यर्थः ॥ पुरा किल राज्ञो रन्तिदेवस्य गवालम्भेष्वेकत्र संभृतादक्तनिष्यन्दाच्चर्मराशेः काचिन्नदी सस्यन्दे। सा चर्मण्वतीत्याख्यायत इति ॥ ४६ ॥

**अन्वयार्थः**—इस प्रकार शरजन्मा देवको आराधन कर वीणाले जानेवाले सिद्धोंके मिथुनोंकरके जलसेचनके भयसे मार्ग त्यागनेवाला तू गवालम्बयज्ञ करनेसे उत्पन्न हुई पृथ्वीमें नदी मूर्तिसे विशेष रूपको प्राप्त हुई ( चर्मण्वती ) रन्तिदेवराजाकी कीर्तिकू सत्कार करताहुआ अवतरण करना ॥ ४६ ॥

**भावार्थः**—हे जलधर! इसप्रकार शरपतके वनसे उत्पन्नहुए देव स्वामिकार्त्तिककी पूजा करनेके पीछे तुम कुछ एक मार्ग उल्लंघन कर आगे वढना। जो सिद्धोंकी स्त्रियें वीणा वजायकर षडाननकी पूजा करनेको आवेंगी, वह वीणापर जल गिरनेके भयसे उसी समय मार्ग छोडदेंगी। तिसके उपरान्त तुम उस मार्गको लांघ, गवालम्बयज्ञ करनेसे उत्पन्न हुई प्रवाहरूपसे ख्याती पाई। रंतिदेव नामक राजाकी-कीर्त्तिका अर्थात् चर्मण्वती नदीका सत्कार करनेवाला होकर उसको उतर जाना ॥ ४६ ॥

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ४७ ॥

**अन्वयः**—शार्ङ्गिणः वर्णचौरे त्वयि जलम् आदातुम् अवनते; पृथुमपि दूरभावात् तनुम् प्रतीयमानम् तस्याः सिन्धोः प्रवाहम् गगनगतयः दृष्टीः आवर्ज्य स्थूलमध्येन्द्रनीलम् एकम् भुवः मुक्तागुणमिव नूनम् प्रेक्षिष्यन्ते ॥ ४७ ॥

**त्वयीति** ॥ शार्ङ्गिणः कृष्णस्य वर्णस्य कान्तेश्चौरे वर्णचौरे ।

नत्तुल्यवर्ण इत्यर्थः । त्वयि जलमादातुमवनते सति पृथुमपि दूरत्वात्तनुं सूक्ष्मतया प्रतीयमानं तस्याः सिन्धोश्चर्मण्वत्याख्यायाः प्रवाहम् । गगने गतिर्येषां ते गगनगतयः खेचराः सिद्धगन्धर्वादयः ॥ अयमपि बहुव्रीहिः पूर्ववज्जन्माद्युत्तरपदेषु द्रष्टव्यः ॥ नूनं सत्यं दृष्टीरावर्ज्य नियम्यैकमेकयष्टिकं स्थूलो महान्मध्यो मध्यमणीभूत इन्द्रनीलो यस्य तं भुवो भूमेर्मुक्तागुणं मुक्ताहारमिव प्रेक्षिष्यन्ते ॥ अत्रात्यन्तनीलमेघसंगतस्य प्रवाहस्य भूकण्ठमुक्तागुणत्वेनोत्प्रेक्षणादुत्प्रेक्षेवेयमिति वशब्देन व्यज्यते । निरुक्तकारस्तु "तत्र तत्रोपमा यत्र इवशब्दस्य दर्शनम्" इतीवशब्ददर्शनादत्राप्युपमैवेति बभ्राम ॥ ४७ ॥

**अन्वयार्थः**-विष्णु भगवानका ( श्याम ) वर्ण चुरानेहारे तेरे जलग्रहण करनेकू झुकनेपर बडा होनेपरभी दूर होनेसे सूक्ष्म विदित होनेसे तिस सिन्धुनदीके प्रवाहकू आकाशगामी गन्धर्वादि दृष्टिको खैंचकर बृहत्मध्यस्थानमें इन्द्रनील मणीवाले एक पृथ्वीके मुक्ताहारकी नाईं निश्चय देखैंगे ॥ ४७ ॥

**भावार्थः**—हे पयोद ! तुम कृष्णजीकी समान श्यामवर्ण हो । जब तुम जलग्रहण करनेके लिये इस चर्मण्ववती नदीपर उतरोगे तब इस नदीकी धार बडी होनेपरभी दूरताके कारण छोटीसी दिखाई देगी । उस कालमें व्योमचारी देवदानवादि दूरसे दृष्टि डालकर देखेंगे, कि मानो पृथ्वीके गलेमें पडीहुई मोतियोंकी मालाके बीचमें एक बडी इन्द्रनील मणी शोभायमान होरहीहै । क्यों कि यह तेरा शरीरही उस नदीमें बडी इन्द्रनील मणीकी समान दिखाई देगा ॥ ४७ ॥

तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम् ।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम् ॥ ४८ ॥

**अन्वयः**—ताम् उत्तीर्य परिचितभ्रूलताविभ्रमाणाम् पक्ष्मोत्क्षेपात् उपरिविलसत्कृष्णशारप्रभाणाम् कुन्दक्षेपानुगमधुकरश्रीमुषाम् दशपुरवधूनेत्रकौतूहलानाम् आत्मबिम्बम् पात्रीकुर्वन् व्रज ॥ ४

नामिनि ॥ तां चर्मण्वतीमुत्तीर्य भ्रुवो लता इव भ्रूलताः ॥ उपमितसमासः ॥ तासां विभ्रमा विलासाः परिचिताः क्षमा येषु तेषां पक्ष्माणि नेत्रलोमानि ॥ "पक्ष्म सूत्रे च सूक्ष्मांशे किञ्जल्के नेत्रलोमनि" इति विश्वः ॥ तेषामुत्क्षेपादुन्नमनादूर्ध्वतोः । कृष्णाश्च ताः शाराश्च कृष्णशारा नीलशबलाः ॥ "वर्णो वर्णेन" इति समासः ॥ "कृष्णरक्तसिताः शाराः" इति यादवः ॥ ततश्च शारशब्दादेव सिद्धे कार्ष्ण्ये पुनः कृष्णपदोपादानं कार्ष्ण्यप्राधान्यार्थम् । रक्तत्वं तु न विवक्षितमुपमानानुसारात्तस्य स्वाभाविकस्य स्त्रीनेत्रेषु सामुद्रिकविरोधादितरस्याप्रसक्तत्वात् । कचिद्भावकथनं तूपपत्तिविषयम् ॥ उपरि विलसन्त्यः कृष्णशाराः प्रभा येषां तेषाम् । कुन्दानि माध्यकुसुमानि ॥ "माध्यं कुन्दम्" इत्यमरः ॥ तेषां क्षेप इतस्ततश्चलनं तस्यानुगा अनुसारिणो ये मधुकरास्तेषां श्रियं मुष्णन्तीति तथोक्तानाम् । क्षिप्यमाणकुन्दानुविधायिमधुकरकलपानामित्यर्थः । दशपुरं रन्तिदेवस्य नगरं तस्य वध्वः स्त्रियः ॥ "वधूर्जाया स्नुषा स्त्री च" इत्यमरः ॥ तासां नेत्रकौतूहलानां नेत्राभिलाषाणाम् । साभिलाषदृष्टीनामित्यर्थः । आत्मबिम्बं स्वमूर्तिं पात्रीकुर्वन्विषयीकुर्वन्व्रज गच्छ ॥ ४८ ॥

अन्वयार्थः—उसे उतरकर मनोहर भ्रूलताके विलासवाली, और पलकोंके बालोंके उठानेसे, ऊपर भागमें मनोहर कृष्ण और लालीकी प्रभावाले चमेली पुष्पोंके चलायमान होनेके अनुसार चलनेहारे भौंरोंकी शोभा चुरानेवाले, रन्तिदेवके नगरकी वहुओंके नेत्रोंकी अभिलाषाका अपनी मूर्तीको पात्र कर्ताहुआ जा ॥४८॥

भावार्थः—हे मेघ ! उस चर्मण्वती नदीको उतरनेके पीछे आगेजाय;-अधिक भृकुटिविलासयुक्त जिनके नेत्रपलक उठनेसे कालेवर्णके तारोंके ऊपर विराजमान होनेसे जिनमें अरुण व श्वेत रंगकी प्रभा शोभायमान होरही है, इधर उधर हलनेवाले, कुन्दके फूलोंपर गुंजारव करनेवाले भ्रमरोंकी शोभा हरण करताहुआ; उस रन्तिदेव नामक राजाके दशपुरनामक नगरमें स्त्रियोंके साभिलाष कटाक्षको ग्रहण करतेहुए तुम आगे बढना ॥ ४८ ॥

ब्रह्मावर्तं जनपदमथ च्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ।
राजन्यानां सितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥ ४९ ॥

**अन्वयः**—अथ ब्रह्मावर्तम् जनपदम् छायया गाहमानः क्षत्रप्रधनपिशुनम् कौरवम् क्षेत्रम् भजेथाः यत्र गाण्डीवधन्वा सितशरशतैः राजन्यानाम् मुखानि धारापातैः कमलानि त्वमिव अभ्यवर्षत् ॥ ४९ ॥

**ब्रह्मावर्तमिति** ॥ अथानन्तरं ब्रह्मावर्तं नाम जनपदं देशम् ॥ अत्र मनुः—"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥" इति ॥ छाययानातपमण्डलेन गाहमानः प्रविशन्न तु स्वरूपेण । "पीठक्षेत्राश्रमादीनि परिवृत्यान्यतो व्रजेत्" इति वचनात् । क्षत्रप्रधनपिशुनम् । अद्यापि शिरःकपालादिमत्तया कुरुपाण्डवयुद्धसूचकमित्यर्थः ॥ "युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्" इत्यमरः ॥ तत्प्रसिद्धं कुरूणामिदं कौरवं क्षेत्रं भजेथाः । कुरुक्षेत्रं व्रजेत्यर्थः । यत्र कुरुक्षेत्रे गाण्डचस्यास्तीति गाण्डीवं धनुर्विशेषः ॥ "गाण्डचजगात्संज्ञायाम्" इति मत्वर्थीयो वप्रत्ययः ॥ "कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ" इत्यमरः ॥ तद्धनुर्यस्य स गाण्डीवधन्वार्जुनः ॥ "वा संज्ञायाम्" इत्यनङादेशः ॥ सितशरशतैर्निशितबाणसहस्रै राजन्यानां राज्ञां मुखानि धाराणामुदकधाराणां पातैः कमलानि त्वमिवाभ्यवर्षदभिमुखं वृष्टवान् । शरवर्षेण शिरांसि चिच्छेदेत्यर्थः ॥ ४९ ॥

**अन्वयार्थः**–इसके उपरान्त ब्रह्मावर्त देशको छायासे अवगाहन करताहुआ कुरुपाण्डव युद्धके सूचक कुरुक्षेत्रमें जाना जहां अर्जुनने तीक्ष्ण सहस्रों बाणोंको राजोंके मुखोंपर वरसाये जैसे तू कमलोंपर जलधारा वर्षाता है ॥ ४९ ॥

**भावार्थः**—इसके उपरान्त ब्रह्मावर्त देशमें छायारूपसे प्रवेश करनेवाले तुम, जहांपर कौरवपाण्डवोंका युद्ध हुआ; उस कुरुक्षेत्रमें जाना;—जैसे तुम कमलोंपर असंख्य जलधारा वर्षातेहो, वैसेही गाण्डीव धनुषधारी अर्जुननें सन्मुख खडे हो राजालोगोंके अंगोंपर शतशः तीक्ष्ण बाण वर्षाय उनके शिरकमलोंको काटाथा४९

**हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां**
**बन्धुप्रीत्या समरविमुखो लाङ्गली याः सिषेवे ।**
**कृत्वा तासामभिगममपां सौम्य सारस्वतीना-**
**मन्तःशुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः ॥ ५० ॥**

अन्वयः—बन्धुप्रीत्या समरविमुखः लाङ्गली अभिमतरसाम् रेवतीलोचनाङ्काम् हालाम् हित्वा याः सिषेवे हे सौम्य तासाम् सारस्वतीनाम् अपाम् अभिगमम् कृत्वा वर्णमात्रेण कृष्णोऽपि त्वम् अन्तःशुद्धः भविता ॥ ५० ॥

हित्वेति ॥ बन्धुप्रीत्या कुरुपाण्डवस्नेहेन । न तु भयेन । समरविमुखो युद्धनिःस्पृहः । लाङ्गलमस्यास्तीति लाङ्गली हलधरः । अभिमतरसामभीष्टस्वादां तथा रेवत्याः स्वप्रियाया लोचने एवाङ्कः प्रतिबिम्बितत्वाच्चिह्नं यस्यास्तां हालां सुराम् ॥ "सुरा हलिप्रिया हाला" इत्यमरः ॥ "अभियुक्तं देशभाषापदमित्यत्र सूत्रे हालेति देशभाषापदमप्यतीव कविप्रयोगात्साधु" इत्युदाजहार वामनः ॥ हित्वा त्यक्त्वा । दुस्त्यजामपीति भावः । याः सारस्वतीरपः सिषेवे । हे सौम्य सुभग, त्वं तासां सरस्वत्या नद्या इमाः सारस्वत्यस्तासामभिगमं सेवां कृत्वान्तोऽन्तरात्मनि शुद्धो निर्मलो निर्दोषो भविता ॥ "ण्वुल्तृचौ" इति तृच् ॥ अपि सद्य एव पूतो भविष्यसीत्यर्थः ॥ "वर्तमानसामीप्ये वर्तमानवद्वा" इति वर्तमानप्रत्ययः ॥ वर्णमात्रेण वर्णेनैव कृष्णः श्यामः । न तु पापेनेत्यर्थः । अन्तःशुद्धिरेव संपाद्या न तु बाह्या । बहिः शुद्धोऽपि सूतवधप्रायश्चित्तार्थं सारस्वतसलिलसेवी तत्र भगवान्बलभद्र एव निदर्शनम् । अतो भवतापि सरस्वती सर्वथा सेवितव्येति भावः ॥ ५० ॥

अन्वयार्थः—कुरुपाण्डवोंके स्नेहसे, भाइयोंकी प्रीतिसे समर करनेसे विमुख हुए बलदेवजी अभीष्ट स्वादयुक्त रेवतीके नेत्रोंके चिन्हवाली मदिराको छोडकर जिसको ( नदीको ) सेवन करतेहुए. हे सौम्य उसी सरस्वतीके जलकी सेवा करके वर्णमात्रसे कृष्णभी तू भीतरसे शुद्ध हो जायगा ॥ ५० ॥

भावार्थः—हे साधो! केवल कौरव और पाण्डवोंपर बराबर स्नेहके होनेसे मध्यस्थपन स्वीकार कर किसी पक्षमें युद्ध करनेकेलिये न मिलनेवाले बलदेवजीने अपनी अत्यन्त प्रिय, व जिस्से रेवतीकी आंखोंका चिन्ह निकलता है, ऐसी सुराको त्याग जिस सरस्वती नदीका सेवन किया; उसी सरस्वतीके जलका तुम सेवन करो। ऐसा करनेसे कृष्णवर्णकेभी तुम भीतरसे शुद्ध हो जाओगे ॥ ५० ॥

तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शंभोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५१ ॥

अन्वयः—तस्मात् अनुकनखलम् शैलराजावतीर्णाम् सगरतनयस्वर्गसोपानपंक्तिम् जन्होः कन्याम् गच्छेः। या गौरीवक्त्रभ्रूकुटिरचनाम् फेनैः विहस्येव इन्दुलग्नोर्मिहस्ता, शम्भोः केशग्रहणम् अकरोत् ॥ ५१ ॥

**तस्मादिति** ॥ तस्मात्कुरुक्षेत्रात्कनखलस्याद्रेः समीपेऽनुकनखलम् ॥ "अनुर्यत्समया" इत्यव्ययीभावः ॥ शैलराजाद्धिमवतोऽवतीर्णां सगरतनयानां स्वर्गसोपानपङ्क्तिम् । स्वर्गप्राप्तिसाधनभूतामित्यर्थः । जह्नोर्नाम राज्ञः कन्यां जाह्नवीं गच्छेर्गच्छ ॥ विध्यर्थे लिङ् ॥ या जाह्नवी गौर्या वक्त्रे या भ्रुकुटिरचना सापत्न्यरोषाद्भ्रूभङ्गकरणं तां फेनैर्विहस्यावहस्येव ॥ धावल्यात्फेनानां हासत्वेनोत्प्रेक्षा । इन्दौ शिरोमाणिक्यभूते लग्ना ऊर्मय एव हस्ता यस्याः सेन्दुलग्नोर्मिहस्ता सती शंभोः केशग्रहणमकरोत् । यथा काचित्प्रौढा नायिका सपत्नीमसहमाना स्ववाल्लभ्यं प्रकटयन्ती स्वभर्तारं सह शिरोरत्नेन केशेष्वाकर्षति तद्वदिति भावः ॥ इदं च पुरा किल भगीरथप्रार्थनया भगवतीं गगनपथात्पतन्तीं गङ्गां गङ्गाधरो जटाजूटेन जग्राहेति कथामुपजीव्योक्तम् ॥ ५१ ॥

**अन्वयार्थः**—उस कुरुक्षेत्रसे कनखलके निकट हिमालयसे निकलीहुई सगरसन्तानोंको स्वर्ग पहुंचानेकी सीढीरूप, जन्हुकी कन्या गंगाको प्राप्त होना। जो गंगा पार्वतीके मुखकी कुटिल भ्रूरचनाकू फेनोंसे हंसकर, चंद्रमामें लगेहुए तरंगरूपी हाथोंवाली शिवजीके केशग्रहणकू करती हुई ॥ ५१ ॥

**भावार्थः**—हे बलाहक ! फिर तुम कुरुक्षेत्रसे चलकर कनखल नामक पर्वतकी तलेटीके निकट गमन करना, इस स्थानमें सगरके पुत्रोंको स्वर्गप्राप्तिकी निशेनी जन्हुकुमारि भागीरथीजी पृथ्वीमें उतरी हैं; इन गंगाजीने सपत्निभावसहिष्णु प्रौढा स्त्रीकी समान फेनपुंज-

रूप उपहाससे भगवती भवानीजीकी भृकुटि रचनाका अवहेला (निरादर) करके शिरोभूषण चन्द्ररेखाकी समान तरंगरूप हाथसे भगवान भवानीपतिके केश ग्रहण किये हैं ॥ ५१ ॥

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।
संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययासौ
स्यादस्थानोपगतयमुनासंगमेवाभिरामा ॥ ५२ ॥

अन्वयः—सुरगजइव व्योम्नि पश्चार्द्धलम्बी स्थित्वा अच्छस्फटिकविशदम् तस्याः अम्भः तिर्यक् पातुम् त्वम् तर्कयेश्चेत् सपदि स्रोतसि संसर्पन्त्या भवतः छायया असौ अस्थानोपगतयमुनासंगमेव अभिरामा स्यात् ॥ ५२ ॥

तस्या इति ॥ सुरगज इव कश्चिद्दिग्गज इव व्योम्नि पश्चादर्धं पश्चार्धम् । पश्चिमार्धमित्यर्थः ॥ पृषोदरादित्वात्साधुः ॥ तेन लम्बत इति पश्चार्धलम्बी सन्पश्चार्धभागेन व्योम्नि स्थित्वा । पूर्वार्धेन जलोन्मुख इत्यर्थः । अच्छस्फटिकविशदं निर्मलस्फटिकावदातं तस्या गङ्गाया अम्भस्तिर्यक्तिरश्चीनं यथा तथा पातुं त्वं तर्कयेर्विचारयेश्चेत् । सपदि स्रोतसि प्रवाहे संसर्पन्त्या संक्रामन्त्या भवतश्छायया प्रतिबिम्बेनासौ गङ्गा अस्थाने प्रयागादन्यत्रोपगतः प्राप्तो यमुनासंगमो यया सा तथाभूतेवाभिरामा स्यात् ॥ ५२ ॥

अन्वयार्थः—दिग्गजकीनाई आकाशमें पिछले आधे भागसे लम्बायमान स्थित होकर निर्मल स्फटिककी समान कान्तियुक्त तिन गंगाका जल तिरछा होकर पीनेकू तू विचार करेगा तो शीघ्र प्रवाहमें पडतीहुई तेरी छायासे यह गंगा प्रयागसे अन्यदेशमें प्राप्त हुए यमुनाके संगमकीनाई मनोहर होगी ॥ ५२ ॥

भावार्थः—हे जलद! जब तुम उन गंगाजीमें, उनका स्फटिक समान श्वेतवर्ण जल किसी दिग्गजकी समान आधा शरीर आकाश और आधा शरीर नीचेको झुकायकर, पीनेको प्रवृत्त होगे, तब उस समय तुह्मारी छाया धारमें पडनेसे प्रयागजीमें गंगा यमुनाके संगमसमान दिखलाई देगी ॥ ५२ ॥

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५३ ॥

अन्वयः—आसीनानाम् नाभिगन्धैः सुरभितशिलम् तस्याः एव प्रभवम् तुषारैः गौरम् अचलम् प्राप्य अध्वश्रमविनयने तस्य शृङ्गे निषण्णः शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् शोभाम् वक्ष्यसि ॥ ५३ ॥

आसीनानामिति ॥ आसीनानामुपविष्टानां मृगाणां कस्तूरिकामृगाणाम् ॥ अन्यथा नाभिगन्धानुपपत्तेः ॥ नाभिगन्धैः कस्तूरीगन्धैस्तेषां तदुद्भवत्वात् । अत एव मृगनाभिसंज्ञा च ॥ "मृगनाभिर्मृगमदः कस्तूरी च" इत्यमरः ॥ अथवा नाभयः कस्तूर्यः ॥ "नाभिः प्रधाने कस्तूरीमदे च क्वचिदीरितः" इति विश्वः ॥ तासां गन्धैः सुरभिताः सुरभीकृताः शिला यस्य तं तस्या गङ्गाया एव प्रभवत्यस्मादिति प्रभवः कारणम् । तुषारैर्गौरं सितम् ॥ "अवदातः सितो गौरः" इत्यमरः ॥ अचलं प्राप्य । विनीयतेऽनेनेति विनयनम् ॥ करणे ल्युट् ॥ अध्वश्रमस्य विनयनेऽपनोदके तस्य हिमाद्रेः शृङ्गे निषण्णः सन् । शुभ्रो यस्त्रिनयनस्य त्र्यम्बकस्य वृषो वृषभः ॥ "सुकृते वृषभे वृषः" इत्यमरः ॥ तेनोत्खातेन विदारितेन पङ्केन सहोपमेयामुपमातुमर्हां शोभां वक्ष्यसि वोढासि ॥ वहतेर्लृट् ॥ "त्रिनयन—" इत्यत्र "पूर्वपदात्संज्ञायामगः" इति णत्वं न भवति "क्षुभ्नादिषु च" इति निषेधात् ॥ तस्याः प्रभवमित्यादिना हिमाद्रौ मेघस्य वैवाहिको गृहविहारो ध्वन्यते॥ ५३ ॥

अन्वयार्थः-बैठेहुए मृगोंकी कस्तूरी नाभिकी गंधसे सुगन्धित शिलाकू तिस गंगाकेही उत्पन्न हुए जलकणोंसे श्वेत पर्वतको प्राप्त होकर मार्गश्रम दूर करनेको उसके शृङ्गपर बैठाहुआ स्वच्छ शिवजीके वृषभसे विदारण कीहुई, पंक उपमावाली शोभाकू तू धारण करेगा ॥ ५३ ॥

भावार्थः—जिन पत्थरोंपर कस्तूरीमृग बैठते हैं उनकी नाभिगन्धसे जिसकी शिला सुगन्धित हो रही हैं, ऐसे उस गंगाजीके उत्प-

न्न करनेवाले तर्क पडनेसे श्वेत हिमालयपर्वतके निकट पहुंच, मार्गश्रमहारी उसके शृङ्गपर विश्राम लेते श्री शंकरजीके नंदीकरके उठाई हुई पंककी समान निःसन्देह तुम शोभायमान होगे ॥ ५३ ॥

तं चेद्वायौ सरति सरलस्कन्धसंघट्टजन्मा
बाधेतोल्काक्षपितचमरीवालभारो दवाग्निः ।
अर्हस्येनं शमयितुमलं वारिधारासहस्रै-
रापन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ॥ ५४ ॥

**अन्वयः**—वायौ सरति सरलस्कन्धसंघट्टजन्मा उल्काक्षपितचमरीवालभारः दवाग्निः तम् बाधेतचेत् [तर्हि] एनम् वारिधारासहस्रैः शमयितुम् त्वम् अर्हसि उत्तमानाम् सम्पदः आपन्नार्तिप्रशमनफलाः भवन्ति ॥ ५४ ॥

**तमिति** ॥ वायौ वनवाते सरति वाति सति सरलानां देवदारुद्रुमाणां स्कन्धाः प्रदेशविशेषाः ॥ "अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः" इत्यमरः ॥ तेषां संघट्टेन संघर्षणेन जन्म यस्य स तथोक्तः ॥ जन्मोत्तरपदत्वाद्व्यधिकरणोऽपि बहुव्रीहिः साधुरित्युक्तम् ॥ उल्काभिः स्फुलिङ्गैः क्षपिता निर्दग्धाश्चमरीणां वालभाराः केशसमूहा येन । दव एवाग्निर्दवाग्निर्वनवह्निः ॥ "वने च वनवह्नौ च दवो दाव इतीष्यते" इति यादवः ॥ तं हिमाद्रिं बाधेत चेत्पीडयेद्यदि । एनं दवाग्निं वारिधारासहस्रैः शमयितुमर्हसि ॥ युक्तं चैतदित्याह—उत्तमानां महतां संपदः समृद्धय आपन्नानामार्तानामार्तिप्रशमनमापन्निवारणमेव फलं प्रयोजनं यासां तास्तथोक्ता हि । अतो हिमाचलस्य दावानलस्त्वया शमयितव्य इति भावः ॥ ५४ ॥

**अन्वयार्थः**—वनकी पवन चलनेपर देवदारु वृक्षोंके स्कंधोकी रगडसे उत्पन्न हुई, स्फुलिंगोंसे चामरी गायोंके बाल जलानेहारी वनकी अग्नि उस (पर्वत) कू जा बाधा दे (तो) इसके जलकी धारा-सहस्रोंसे शान्त करनेकू तू योग्य है । उत्तमोंकी संपत्ति दुःखमें प्राप्त हुओंके दुःख शान्तकरनेके फलवाली होती है ॥ ५४ ॥

**भावार्थः**—हे जलधर ! तुह्मारे हिमालय पर्वतपर गमन करनेके समय पवन चलता होगा । और यदि देवदारुके वृक्षोंकी रगडसे

दावानल उत्पन्न हो चिनगारियोंसे चमरगायोंकी पूछके बाल जलाय उस पर्वतको पीडित करे तो तुम अविरल जलधारा वर्षाय उसको बुझा-देना। कारण कि विपदसे ग्रसेहुए पुरुषको विपत्तिसे छुडानाही महात्माजनोंकी सम्पत्तिका एक फल है ॥ ५४ ॥

ये संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मि-
न्मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम्।
तान्कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णा-
न्के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥ ५५ ॥

**अन्वयः**—तस्मिन् संरम्भोत्पतनरभसाः ये शरभाः मुक्ताध्वानम् भवन्तम् सपदि स्वाङ्गभङ्गाय लङ्घयेयुः तान् तुमुलकरकावृष्टिपातावकीर्णान् कुर्वीथाः निष्फलारम्भयत्नाः के वा परिभवपदम् न स्युः ॥ ५५ ॥

**य इति** ॥ तस्मिन्हिमाद्रौ संरम्भः कोपः ॥ "संरम्भः संभ्रमे कोपे" इति शब्दार्णवे ॥ तेनोत्पतन उत्प्लवने रभसो वेगो येषां ते तथोक्ताः ॥ "रभसो वेगहर्षयोः" इत्यमरः ॥ ये शरभा अष्टापद-मृगविशेषाः ॥ "शरभः शलभे चाष्टापदे प्रोक्तो मृगान्तरे" इति विश्वः ॥ मुक्तोऽध्वा शरभोत्प्लवनमार्गो येन तं भवन्तं सपदि स्वाङ्गभङ्गाय लङ्घयेयुः ॥ संभावनायां लिङ् ॥ भवतोऽतिदूरत्वात्स्वाङ्गभङ्गातिरिक्तं फलं नास्ति लङ्घनस्येत्यर्थः। ताञ्शरभांस्तुमुलाः संकुलाः करका वर्षोपलाः॥ "वर्षोपलस्तु करका" इत्यमरः ॥ तासां वृष्टिस्तस्याः पातेनावकीर्णान्विक्षिप्तान्कुर्वीथाः कुरुष्व ॥ विध्यर्थे लिङ् ॥ क्षुद्रोऽप्यधिक्षिपन्प्रतिपक्षः सद्यः प्रतिक्षेप्तव्य इति भावः। तथाहि । आरभ्यन्त इत्यारम्भाः कर्माणि तेषु यत्न उद्योगः स निष्फलो येषां ते तथोक्ताः । निष्फलकर्मोपक्रमा इत्यर्थः। अतः के वा परिभवपदं तिरस्कारपदं न स्युर्न भवन्ति। सर्व एव भवन्तीत्यर्थः॥ यदत्र "घनोपलस्तु करके" इति यादववचनात्करकशब्दस्य नियतपुंलिङ्गताभिप्रायेण "करकाणामवृष्टिः" इति केषांचिद्व्याख्यानं तदन्ये नानुमन्यन्ते। "वर्षोपलस्तु करका" इत्यमरवचनव्याख्याने क्षीरस्वामिना "कमण्डलौ च करकः सुगते च विनायकः" इति नानार्थे पुंस्यपि वक्ष्यतीति वदतोभयलिङ्गताप्रकाशनात्। यादवस्य तु पुंलिङ्गताविधाने तात्पर्यं न तु स्त्रीलिङ्गतानिषेध

इति न तद्विरोधोऽस्ति । "करकस्तु करङ्के स्याद्दाडिमे च कमण्डलौ । पक्षिभेदे करं चापि करका च घनोपले" इति विश्वप्रकाशवचनेनोभयलिङ्गता व्यक्तैवेति न कुत्रापि विरोधवार्ता । अत एव रुद्रः— "वर्षोपलस्तु करका करकोऽपि च दृश्यते" इति ॥ ५५ ॥

अन्वयार्थः—इस पर्वतमें क्रोधसे कूदनेके वेगवाले अष्टपादमृग छोडेहुए मार्गवाले तुमको शीघ्रही अपने अङ्ग तोडनेके निमित्त लङ्घन करेंगे उनको निरन्तर ओलोंके वर्षासे छिन्न करना (क्योंकि) निष्फल कार्योंमें यत्न करनेवाले कौन तिरस्कारके स्थान नहीं होते ॥ ५५ ॥

भावार्थः—हे पर्जन्यराय! इस हिमालयपर जो शरभ नामक महाबलवान आठ चरणवाले मृग हैं, वह तुम्हारे गर्जनको न सहकर क्रोधके मारे मार्ग छोडताहुआ देखकरभी, अपने अङ्गप्रत्यङ्गोंको तोडनेके लिये कूदनेका साहस कर तुमको लांघेंगे, तुम उनके शरीरपर बडी शिलावृष्टि करना, कारण कि जो परिणामको न देखकर कार्य करते हैं उनका यत्न और उद्योग निष्फल होता है; ऐसे किस पुरुषको निरादर और तिरस्कार नहीं होता ॥ ५५ ॥

**तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः**
**शश्वत्सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः ।**
**यस्मिन्दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः**
**संकल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५६ ॥**

**अन्वयः**—तत्र दृषदि व्यक्तम् शश्वत्सिद्धैः उपचितबलिम् अर्धेन्दुमौलेः चरणन्यासम् भक्तिनम्रः सन् परीयाः यस्मिन् दृष्टे उद्धूतपापाः श्रद्दधानाः पुरुषाः करणविगमात् ऊर्ध्वम् स्थिरगणपदप्राप्तये संकल्पन्ते ॥ ५६ ॥

**तत्रेति** ॥ तत्र हिमाद्रौ दृषदि कस्यांचिच्छिलायां व्यक्तं प्रकटं शश्वत्सदा सिद्धैर्योगिभिः ॥ "सिद्धिर्निष्पत्तियोगयोः" इति विश्वः ॥ उपचितबलिं रचितपूजाविधिम् ॥ "बलिः पूजोपहारयोः" इति यादवः ॥ अर्धश्चासाविन्दुश्चेत्यर्धेन्दुः ॥ "अर्धः खण्डे समेंऽशके" इति विश्वः ॥ स मौलौ यस्य तस्येश्वरस्य चरणन्यासं पादविन्या-

सम्। भक्तिः पूज्येष्वनुरागस्तया नम्रः सन्परीयाः प्रदक्षिणं कुरु ॥ परिपूर्वादिणो लिङ् ॥ यस्मिन्पादन्यासे दृष्टे सत्युद्धूतपापा निरस्तकल्मषाः सन्तः श्रद्दधाना विश्वसन्तः पुरुषाः। श्रद्धा विश्वासः। आस्तिक्यबुद्धिरिति यावत् ॥ "श्रदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्या" इति श्रत्पूर्वाद्दधातेः शानच् ॥ करणस्य क्षेत्रस्य विगमादूर्ध्वं देहत्यागानन्तरम् ॥ "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः ॥ स्थिरं शाश्वतं गणानां प्रमथानां पदं स्थानम् ॥ "गणाः प्रमथसंख्यौघाः" इति वैजयन्ती ॥ तस्य प्राप्तये संकल्पन्ते समर्था भवन्ति ॥ क्लृपेः पर्याप्तिवचनस्यालमर्थत्वात्तद्योगे "नमःस्वस्ति–" इत्यादिना चतुर्थी ॥ "अलमिति पर्याप्त्यर्थग्रहणम्" इति भाष्यकारः ॥ "अव्यक्तं व्यञ्जयामास शिवः श्रीचरणद्वयम् ॥ हिमाद्रौ शांभवादीनां सिद्धये सर्वकर्मणाम् ॥ दृष्ट्वा श्रीचरणन्यासं साधकः स्थितये तनुम्। इच्छाधीनशरीरो हि विचरेच्च जगत्त्रयम् ॥" इति शंभुरहस्ये ॥ ५६ ॥

**अन्वयार्थः**–तिसपर्वतकी शिलामें प्रगट निरन्तर सिद्धोंकरके रची पूजाकी विधिकू शिवजीके चरणरखनेकी भक्तिसे नम्र हुआ प्रदक्षिणा करना जिस चरणन्यासके देखनेपर पापरहित होगा श्रद्धावाले पुरुष देह त्यागके अनन्तर स्थिर प्रमथोंके स्थानमें प्राप्त होनेकू समर्थ होते हैं ॥ ५६ ॥

**भावार्थः**—हे पयोद! उस हिमालयपर्वतकी एक शिलाके ऊपर भगवान् शंकरके चरणचिन्ह स्पष्टरूपसे जानपडते हैं, सिद्ध लोग सदा उनकी पूजा कियाकरते हैं। तुमभी उसी स्थानमें जाय, भक्तिभावसे शिर झुकाय उन महादेवजीके चरणचिन्होंकी परिक्रमा करना। जो पुरुष श्रद्धाभक्तिके साथ, उन चरणचिन्होंका दर्शन करते हैं, वह पापपंकसे छूट स्थूलदेहको छोडनेके पीछे, महादेवजीके अविनाशी प्रमथादिगणोंका पद अर्थात् कैलासको निःसन्देह प्राप्त होजाते हैं ॥ ५६ ॥

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः
संसक्ताभिस्त्रिपुरविजयो गीयते किंनरीभिः।
निर्ह्रादस्ते मुरज इव चेत्कन्दरेषु ध्वनिः स्या-
त्संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥ ५७ ॥

अन्वयः—( हे मेघ ) अनिलैः पूर्यमाणाः कीचकाः मधुरम् शब्दायन्ते ( च ) संसक्ताभिः किन्नरीभिः त्रिपुरविजयः गीयते [ च ] कन्दरेषु ते निर्ह्रादः मुरजे ध्वनिः इव स्यात् [ तर्हि ] तत्र पशुपतेः संगीतार्थः समग्रः ननु भावी ॥ ५७ ॥

शब्दायन्त इति ॥ हे मेघ, अनिलैः पूर्यमाणाः कीचका वेणुविशेषाः ॥ "वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इत्यमरः 'कीचको दैत्यभेदे स्याच्छुष्कवंशे द्रुमान्तरे" इति विश्वः ॥ मधुरं श्रुतिसुखं यथा तथा शब्दायन्ते शब्दं कुर्वन्ति । स्वनन्तीत्यर्थः ॥ "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" इत्यादिना क्यङ् ॥ अनेन वंशवाद्यसंपत्तिरुक्ता । संसक्ताभिः संयुक्ताभिर्वंशवाद्यानुषक्ताभिर्वा ॥ "संरक्ताभिः" इति पाठे संरक्तकण्ठीभिरित्यर्थः ॥ किंनरीभिः किन्नरस्त्रीभिः । त्रयाणां पुराणां समाहारस्त्रिपुरम् ॥ "तद्धितार्थोत्तरपद—" इति समासः । पात्रादित्वान्नपुंसकत्वम् ॥ तस्य विजयो गीयते ॥ कन्दरेषु दरीषु ॥ "दरी तु कन्दरो वा स्त्री" इत्यमरः ॥ ते तव निर्ह्रादो मुरजे वाद्यभेदे ध्वनिरिव । मुरजध्वनिरिवेत्यर्थः । स्याच्चेत्तर्हि तत्र चरणसमीपे पशुपतेर्नित्यसंनिहितस्य शिवस्य संगीतम् ॥ "तौर्यत्रिकं तु संगीतं न्यायारम्भे प्रसिद्धके । तूर्याणां त्रितये च" इति शब्दार्णवे ॥ तदेवार्थः संगीतार्थः संगीतवस्तु ॥ "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः ॥ समग्रः संपूर्णो भावी ननु भविष्यति खलु ॥ "भविष्यति गम्यादयः" इति भविष्यदर्थे णिनिः ॥ ५७ ॥

अन्वयार्थः–हे मेघ ! पवनसे पूर्ण होनेके कारण छिद्रवाले वांस मधुर शब्द करते हैं, उनसे मिलीहुई किन्नरीयोंकरके त्रिपुरदैत्यका विजय गायाजाता है, और कन्दराओंमें तेरी गर्जना मुरजके शब्दकी समान हो तौ तहां शिवजीका संगीतअर्थ संपूर्ण होगा ॥ ५७ ॥

भावार्थ—हे बलाहक ! कीचक बांस पूरित हो वंशीकी समान मधुर शब्द किया करते हैं; किन्नरियेंभी इस स्थानपर मिलकर मधुर स्वरसे त्रिपुरविजयकी कथाको गाती हैं, ( ऐसे समय ) उनके साथ तुह्मारा गर्जन जो कन्दराओंमें प्रतिध्वनित होकर मृदंगकी समान शब्दायमान होवै, तो भगवान पशुपतिके निकट संगीतके सब अङ्ग निःसन्देह सम्पूर्ण हो जांयगे ॥ ५७ ॥

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान्विशेषा-
न्हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम्।
तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः॥५८॥

**अन्वयः**—प्रालेयाद्रेः उपतटम् तान् तान् विशेषान् अतिक्रम्य हंसद्वारम् भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम् [ अस्ति ] तेन बलिनियमनाभ्युद्यतस्य, विष्णोः श्यामः पाद इव तिर्यगायामशोभी उदीचीम् दिशम् अनुसरेः ॥ ५८ ॥

**प्रालेयेति** ॥ प्रालेयाद्रेर्हिमाद्रेरुपतटं तटसमीपे ॥ "अव्ययं विभक्ति-" इत्यादिना समीपार्थेऽव्ययीभावः ॥ तांस्तान् ॥ वीप्सायां द्विरुक्तिः ॥ विशेषान्द्रष्टव्यार्थान् ॥ "विशेषोऽवयवे द्रव्ये द्रष्टव्योत्तमवस्तुनि" इति शब्दार्णवे ॥ अतिक्रम्यानुसरेर्गच्छेरित्यनागतेन संबन्धः ॥ हंसानां द्वारं हंसद्वारम् ॥ मानसप्रस्थायिनो हंसाः क्रौञ्चरन्ध्रेण संचरन्त इत्यागमः ॥ भृगुपतेर्जामदग्न्यस्य यशोवर्त्म । यशःप्रवृत्तिकारणमित्यर्थः । यत्क्रौञ्चस्याद्रे रन्ध्रमस्ति तेन क्रौञ्चबिलेन बलेर्दैत्यस्य नियमने बन्धनेऽभ्युद्यतस्य प्रवृत्तस्य विष्णोर्व्यापकस्य त्रिविक्रमस्य श्यामः कृष्णवर्णः पाद इव तिर्यगायामेन क्षिप्रप्रवेशनार्थं तिरश्चीनदैर्घ्येण शोभत इति तथाविधः सन्नुदीचीमुत्तरां दिशमनुसरेरनुगच्छ ॥ पुरा किल भगवतो देवाद्धूर्जटेर्धनुरुपनिषःधीयानेन भृगुनन्दनेन स्कन्धस्य स्पर्धया क्रौञ्चशिखरिणमतिनिशितविशिखमुखेन हेलया मृत्पिण्डभेदं भित्त्वा तत एव क्रौञ्चक्रोडादेव सद्यः समुज्जृम्भिते कस्मिन्नपि यशःक्षीरनिधौ निखिलमपि जगज्जालमाप्लावितमिति कथा श्रूयते ॥ ५८ ॥

**अन्वयार्थः**–हिमालय पर्वतके उन उन दर्शनीय स्थानोंको अतिक्रमण कर हंसोंके द्वार परशुरामके यशका कारण जो क्रौंचपर्वतका रंध्र है। तिसकरके बलिके निग्रहमें प्रवृत्त हुए विष्णुके कृष्णवर्ण चरणकी समान ( शीघ्र चलनेको ) तिरछे होनेके कारण दीर्घ शोभावाला उत्तर दिशाको जा ॥ ५८ ॥

**भावार्थः**—हे पयोद ! उस हिमालय पर्वतके तटसमीप देखनेयोग्य जो चमत्कार स्थान हैं, उन सबको देखकर, हंसपक्षियोंके

क्षत्रियोंका नाश, और परशुरामका अद्भुत कीर्तिस्वरूप, हिमालयपार जानेका एक मार्ग, क्रौंच पर्वतका एक छिद्र है; उस मार्गके नालिको लांघतेहुए श्रीविष्णुजीके श्यामचरणकी समान तिरछे और विस्तारवाले किये अपने शरीरसे विस्तारवाले होतेहुए तुम उत्तर दिशाको गमन करो ॥ ५८ ॥

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसंधेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥ ५९ ॥

अन्वयः—ऊर्ध्वम् गत्वा दशमुखभुजोच्छ्वासितप्रस्थसन्धेः त्रिदशवनितादर्पणस्य कैलासस्य त्वम् अतिथिः स्याः, यः कुमुदविशदैः शृङ्गोच्छ्रायैः खम् वितत्य प्रतिदिनम् राशीभूतः त्र्यम्बकस्य अट्टहास इव स्थितः [ अस्ति ] ॥ ५९ ॥

गत्वेति ॥ क्रौञ्चबिलनिर्गमनानन्तरमूर्ध्वं च गत्वा दशमुखस्य रावणस्य भुजैर्बाहुभिरुच्छ्वासिता विश्लेषिताः प्रस्थानां सानूनां संधयो यस्य तस्य ॥ एतेन नयनकौतुकसद्भाव उक्तः ॥ त्रिर्दशपरिमाणमेषामस्तीति त्रिदशाः ॥ "संख्ययाव्यया–" इत्यादिना बहुव्रीहिः । "बहुव्रीहौ संख्येये डच्–" इत्यादिना समासान्तो डजिति क्षीरस्वामी ॥ त्रिदशानां देवानां वनितास्तासां दर्पणस्य ॥ कैलासस्य स्फटिकत्वाद्रजतत्वाद्वा बिम्बग्राहित्वेनेदमुक्तम् ॥ कैलासस्यातिथिः स्याः । यः कैलासः कुमुदविशदैर्निर्मलैः शृङ्गाणामुच्छ्रायैरौन्नत्यैः खमाकाशं वितत्य व्याप्य प्रतिदिनं दिने दिने राशीभूतस्त्र्यम्बकस्य त्रिलोचनस्याट्टहासोऽतिहास इव स्थितः ॥ "अट्टावतिशयक्षौमौ" इति यादवः ॥ धावल्याद्धासत्वेनोत्प्रेक्षा । हासादीनां धावल्यं कविसमयसिद्धम् ॥ ५९ ॥

**अन्वयार्थः**—तहांसे ऊपरको जाकर रावणकी भुजाओंसे पृथक् की हुई प्रान्तोंके पर्वतकी संधिवाले देवताओंकी स्त्रियोंके दर्पण, कैलासका तू अतिथि होना, जो कैलास कुमुदकी समान स्वच्छ शृंगोंकी उच्चतासे आकाशकू व्याप्त होकर प्रतिदिन संघट्ट हुए शिवजीके अट्टहासकी समान स्थित है ॥ ५९ ॥

**भावार्थः**—क्रौंचपर्वतसे निकलनेके पीछे ऊपरके मार्गमें जाकर, रावणकी भुजाओंने जिसके शिखरोंके जोड खिलादिये हैं, और जो झुमकने दमकनेके सुरनारियोंका दर्पण स्वरूप है, ऐसे कैलासपर्वतके तुम अतिथि होना अर्थात् वहां पहुंचना । जो कैलासपर्वत चन्द्रविकाशी कमलफूलोंकी समान शुभ्र शिखरोंसे आकाशमें व्यापकर प्रतिदिनके एकत्र हुए श्रीमहादेजीके अट्टहासकी समान है ॥ ५९ ॥

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यः कृत्तद्विरदशनच्छेदगौरस्य तस्य ।
शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्री-
मंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ६० ॥

**अन्वयः**—स्निग्धभिन्नाञ्जनाभे त्वयि तटगते सद्यः कृत्तद्विरददशनच्छेदगौरस्य तस्य अद्रेः मेचके वाससि अंसन्यस्ते हलभृत इव स्तिमितनयनप्रेक्षणीयाम् शोभाम् भवित्रीम् उत्पश्यामि ॥६०॥

**उत्पश्यामीति** ॥ स्निग्धं मसृणं भिन्नं मर्दितं च यदञ्जनं कज्जलं तस्याभेवाभा यस्य तस्मिंस्त्वयि तटगते सानुं गते सति सद्यः कृत्तस्य छिन्नस्य द्विरददशनस्य गजदन्तस्य छेदवद्गौरस्य धवलस्य तस्याद्रेः कैलासस्य मेचके श्यामले ॥ "कृष्णे नीलासितश्यामकालश्यामलमेचकाः" इत्यमरः ॥ वाससि वस्त्रेंऽसन्यस्ते सति हलभृतो बलभद्रस्येव स्तिमिताभ्यां नयनाभ्यां प्रेक्षणीयां शोभां भवित्रीं भाविनीमुत्पश्यामि । शोभा भविष्यतीति तर्कयामीत्यर्थः ॥ श्रौती पूर्णोपमालंकारः ॥६०॥

**अन्वयार्थः**-स्निग्ध और मर्दित हुए अंजनकी नाभिवाले तेरे तटपर प्राप्त होनेमें शीघ्र छिन्न किये हाथीके दशनच्छेदवत् श्वेत उस कैलासपर्वतकी श्याम वस्त्रके कंधेपर रखनेमें बलरामजीकी समान नीचेहुए नेत्रोंकी दर्शनीय शोभा होनेवालीकू तर्कना करताहूं ॥६० ॥

**भावार्थः**—हे जलधर ! तुम मलेहुए स्निग्ध अंजनकी समान कृष्णवर्ण हो, कैलासभी नवीन काटेहुए हाथीके दांतकी समान गौरवर्ण है । मैं देखताहूं कि जब तुम कैलासपर्वतके शिखरपर

पहुंचोगे, तब तुम्हें गोरीके कन्धेपर श्याम वस्त्र पहनेकी समान यह कैलासपर्वत एक एक देखने योग्य अनिर्वचनीयहुई शोभाको निःसन्देह प्राप्त करेगा ॥ ६० ॥

हित्वा तस्मिन्भुजगवलयं शंभुना दत्तहस्ता
क्रीडाशैले यदि च विहरेत्पादचारेण गौरी ।
भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी ॥ ६१ ॥

अन्वयः—तस्मिन् क्रीडाशैले शम्भुना भुजगवलयम् हित्वा दत्तहस्ता गौरी पादचारेण विहरेत् यदि [ तर्हि ] त्वम् अग्रयायी [ तथा ] स्तम्भितान्तर्जलौघः भङ्गीभक्त्या विरचितवपुः मणित-टारोहणाय सोपानत्वम् कुरु ॥ ६१ ॥

हित्वेति ॥ तस्मिन्क्रीडाशैले कैलासे ॥ "कैलासः कनकाद्रिश्च मन्दरो गन्धमादनः । क्रीडार्थे निर्मिताः शंभोर्देवैः क्रीडाद्रयोऽभवन् ॥" इति शंभुरहस्ये ॥ शंभुना शिवेन भुजग एव वलयः कङ्कणं हित्वा गौर्या भीरुत्वात्त्यक्त्वा दत्तहस्ता सती गौरी पादचारेण विचरेद्यदि तर्ह्यग्रयायी पुरोगतस्तथा स्तम्भितो घनीभावं प्रापितोऽन्तर्जलस्यौघः प्रवाहो यस्य स तथाभूतः । भङ्गीनां पर्वणां भक्त्या रचनया विरचित-वपुः कल्पितशरीरः सन् । मणीनां तटं मणितटं तस्यारोहणाय सो-पानत्वं कुरु । सोपानभावं भजेत्यर्थः ॥ ६१ ॥

**अन्वयार्थः**–उस क्रीडापर्वतमें शिवजीसे सर्परूपी कंकण त्याग होनेपर हाथ दिये पार्वती यदि पैरोंसे चलती हो तौ तू आगे चलनेवा-ला तथा अन्तरमें जलका समूह स्तंभित करनेवाला पर्वोंकी रचनासे कल्पित शरीरवाला होताहुआ, मणितटको आरोहण करनेके निमित्त सोपानपन करना ॥ ६१ ॥

**भावार्थः**–हे वारिवाह! उस क्रीडापर्वतपर श्रीमहादेवजीने स-र्पोंके कंगनोंका त्याग कर, जिनपर अपना हाथ धरदिया है ऐसी पार्वतीजी जब उसके मणिमय शिखरपर पैदल चलकर विहार करने लगें तो तुम आगे जाय, अपने अंतरका जल थमाय, संध्याकी रचनाके समान अपना शरीर करके उनके ( शिवपार्वतीके ) मणिमय शिखरपर चढनेकेलिये सीढीरूप हो जाना ॥ ६१ ॥

तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ।
ताभ्यो मोक्षस्तव यदि सखे घर्मलब्धस्य न स्या-
त्क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भीषयेस्ताः ॥ ६२ ॥

अन्वयः—तत्र अवश्यम् सुरयुवतयः वलयकुलिशोद्घट्टनोद्गीर्णतोयम् त्वाम् यंत्रधारागृहत्वम् नेष्यन्ति हे सखे ! घर्मलब्धस्य तव मोक्षः ताभ्यः न स्यात् [ तर्हि ] क्रीडालोलाः ताः श्रवणपरुषैः गर्जितैः भीषयेः ॥ ६२ ॥

तत्रेति ॥ तत्र कैलासेऽवश्यं सर्वथा सुरयुवतयो वलयकुलिशानि कङ्कणकोटयः ॥ शतकोटिवाचिना कुलिशशब्देन कोटिमात्रं लक्ष्यते ॥ तैरुद्घट्टनानि प्रहारास्तैरुद्गीर्णमुत्सृष्टं तोयं येन तं त्वां यन्त्रेषु धारा यन्त्रधारास्तासां गृहत्वं कृत्रिमधारागृहत्वं नेष्यन्ति प्रापयिष्यन्ति ॥ हे सखे मित्र, घर्मे निदाघे लब्धस्य ॥ घर्मलब्धत्वं चास्य देवभूमिषु सर्वदा सर्वर्तुसमाहारात्प्राथमिकमेघत्वाद्वा । यथोक्तम्—"आषाढस्य प्रथम—" इति ॥ तव ताभ्यः सुरयुवतिभ्यो मोक्षो न स्याद्यदि तदा क्रीडालोलाः क्रीडासक्ताः । प्रमत्ता इत्यर्थः । ता सुरयुवतीः श्रवणपरुषैः कर्णकटुभिर्गर्जितैः । करणैर्भीषयेस्त्रासयेः ॥ अत्र हेतुभयाभावादात्मनेपदं षुगागमश्च न ॥ ६२ ॥

अन्वयार्थः—उस कैलासमें सर्वथा देवताओंकी स्त्रियें कंकणकी कोटिके प्रहारसे जल छोडनेवाले तुझे कृत्रिम धारागृहपने—( फुहारा यंत्र ) कू प्राप्त करेंगी हे मित्र ! धूपमें प्राप्त हुए तेरा छुटकारा उनसे न होगा ( तो ) क्रीडामें आसक्त उन्हे कर्णकठोर गर्जनेसे डराना ॥ ६२ ॥

भावार्थः—हे वारिधर ! इस स्थानमें क्रीडाकौतुककी लालसासे, देवताओंकी स्त्रियें, कंकणके अग्रभागसे उघाड तुमसे जल छुडवाय, पिचकारीके समान करडालेंगी । हे मित्र ! ग्रीष्मके समय जो तुमको पायकर वह न छोडें तो श्रवण-कठोर घोर गर्जना करके तुम उनको भय दिखाना ॥ ६२ ॥

हेमाम्भोजप्रसवि सलिलं मानसस्याददानः
कुर्वन्कामं क्षणमुखपटप्रीतिमैरावतस्य ।
धुन्वन्कल्पद्रुमकिसलयान्यंशुकानीव वातै-
र्नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम् ॥ ६३ ॥

अन्वयः—हे जलद, हेमाम्भोजप्रसवि मानसस्य सलिलम् आददानः ( तथा ) ऐरावतस्य क्षणमुखपटप्रीतिम् कुर्वन् [ तथा ] कल्पद्रुमकिसलयानि अंशुकानीव वातैः धुन्वन् नानाचेष्टैः ललितैः तम् नगेन्द्रम् कामम् निर्विशेः ॥ ६३ ॥

हेमेति ॥ हे जलद, हेमाम्भोजानां प्रसवि जनकम् ॥ "जिदृक्षि–" इत्यादिनेनिप्रत्ययः ॥ मानसस्य सरसः सलिलमाददानः । पिबन्नित्यर्थः । तथैरावतस्येन्द्रगजस्य । कामचारित्वाद्वा शिवसेवार्थमिन्द्रागमनाद्वा समागतस्येति भावः । क्षणे जलदानकाले मुखे पटेन या प्रीतिस्तां कुर्वन् । तथा कल्पद्रुमाणां किसलयानि पल्लवभूतान्यंशुकानि सूक्ष्मवस्त्राणीव ॥ "अंशुकं वस्त्रमात्रे स्यात्परिधानोत्तरीययोः । सूक्ष्मवस्त्रे नातिदीप्तौ" इति शब्दार्णवे ॥ वातैर्मेघवातैर्धुन्वन् । नाना बहुविधाश्चेष्टास्तोयपानादयो येषु तैर्ललितैः क्रीडितैः ॥ "ना भावभेदे स्त्रीनृत्ये ललितं त्रिषु सुन्दरे । अस्त्रियां प्रमदागारे क्रीडिते जातपल्लवे" इति शब्दार्णवे ॥ तं नगेन्द्रं कैलासं कामं यथेष्टं निर्विशेः समुपभुङ्क्ष्व ॥ "निर्वेशो भृतिभोगयोः" इत्यमरः । यथेच्छविहारो मित्रगृहेषु मैत्र्याः फलम् । सहजमित्रं च ते कैलासः । मेघपर्वतयोरब्जसूर्ययोरब्धिचन्द्रयोः शिखिजीमूतयोः समीराग्न्योर्भिन्नता स्वयमिति भावः ॥ ६३ ॥

**अन्वयार्थः**—हे मेघ ! सुवर्णकमलोंके उत्पन्न करनेवाले मानससरोवरके जलकू ग्रहण करताहुआ तथा ऐरावतगजकी क्षणमात्र ( जलदानसे ) मुखवस्त्रकी प्रीतिकू करता हुआ ( तथा ) कल्पवृक्षकी कोंपलोंको सूक्ष्म वस्त्रोंकी समान पवनसे कंपाता हुआ अनेक चेष्टाओंसे मनोहर उस पर्वतकू यथेष्ट उपभोग करना ॥ ६३ ॥

**भावार्थः**—हे जलद ! जिसमें सुवर्णमय कमल उत्पन्न होते हैं, ऐसे उस मानससरोवरका जल पीकर, व शिवजीकी पूजाके लिये आ-

येहुए इन्द्रके ऐरावतको जल ग्रहण करनेके समय मुखवस्त्रसे होने वाले आनन्दको दे, मंजुल वायु जिसभांति सूक्ष्म वस्त्रको हिलाता है, वैसेही कल्पवृक्षके कोमल पत्तोंको हिलाय उदकपानादि अनेक प्रकारकी क्रीडा करतेहुए तुम उस कैलासपर्वतपर इच्छानुसार विहार करो ॥ ६३ ॥

तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन् ।
या वः काले वहति सलिलोद्गारमुच्चैर्विमाना
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥६४॥

**अन्वयः—**प्रणयिनः तस्य उत्सङ्गे स्रस्तगङ्गादुकूलाम् अलकाम् कामिनीमिव दृष्ट्वा हेकामचारिन् त्वम् पुनः नज्ञास्यसे इति न उच्चैर्विमाना वःकाले सलिलोद्गारम् अभ्रवृन्दम् कामिनी मुक्ताजालग्रथितम् अलकमिव वहति ॥ ६४ ॥

तस्येति ॥ प्रणयिनः प्रियतमस्येव तस्य कैलासस्योत्सङ्गे ऊर्ध्वभागे कटौ च ॥ "उत्सङ्गो मुक्तसंयोगे सक्थन्यूर्ध्वतलेऽपि च" इति मालतीमालायाम् ॥ गङ्गादुकूलं शुभ्रवस्त्रमिवेत्युपमितसमासः ॥ "दुकूलं सूक्ष्मवस्त्रे स्यादुत्तरीये सितांशुके" इति शब्दार्णवे ॥ अन्यत्र तु गङ्गैव दुकूलम् ॥ तत्स्रस्तं यस्यास्तां तथोक्तामलकां कुबेरनगरीं दृष्ट्वा । कामिनीमिवेति शेषः । हे कामचारिन्, त्वं पुनस्त्वं तु न ज्ञास्यस इति न । किं तु ज्ञास्यस एवेत्यर्थः ॥ कामचारिणस्ते पूर्वमपि बहुकृत्वो दर्शनसंभवादज्ञानमसंभावितमेवेति निश्चयार्थं नञ्द्वयप्रयोगः । तदुक्तम्—"स्मृतिनिश्चयसिद्ध्यर्थेषु नञ्द्वयप्रयोगः" इति ॥ उच्चैरुन्नतानि विमानानि सप्तभूमिकाभवनानि यस्यां सा ॥ "विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि" इति यादवः ॥ मेघसंवाहनस्थानसूचनार्थमिदं विशेषणम् ॥ अन्यत्र विमाना निष्कोपा । यालका । वो युष्माकं काले ॥ मेघकाल इत्यर्थः॥ कालस्य सर्वमेघसाधारण्याद्वा इति बहुवचनम् ॥ सलिलमुद्गिरतीति सलिलोद्गारम् । स्रवत्सलिलधारमित्यर्थः ॥ अभ्रवृन्दं मेघकदम्बकं कामिनी स्त्री मुक्ताजालैर्मौक्तिकसरैर्ग्रथितं प्रत्युप्तम् ॥ "पुंश्चल्यां मौक्तिके मुक्ता" इति यादवः ॥

अलकमिव चूर्णकुन्तलमिव ॥ जात्यैकवचनम् ॥ "अलकाश्चूर्णकुन्तलाः" इत्यमरः ॥ वहति बिभर्ति ॥ अत्र कैलासस्यानुकूलनायकत्वमलकायाश्च स्वाधीनपतिकाख्यनायिकात्वं ध्वन्यते । "एकायत्तोऽनुकूलः स्यात्" इति । "प्रियोपलालिता नित्यं स्वाधीनपतिका मता" इति च लक्षयन्ति । उदाहरन्ति च—"लालयन्नलकान्तानञ्चयन्नङ्गमङ्गेन । एकां विनोदयन्कान्तां छायावदनुवर्तते ॥" इति ॥ ६४ ॥

अन्वयार्थः—प्रीति करनेवाले उस कैलासके ऊर्ध्व भागमें गंगारूपी वस्त्र त्यागनेवाली अलकापुरीको स्त्रीकीनाई देखकर, हे यथेच्छगामी ! तू फिर उसे न जानेगा यह नहीं ( किन्तु जानेगा ) ऊंचे सतमंजले महलोंवाली अलका मेघकालमें जलछोडनेवाले बादलोंके समूहको ऐसे धारण करती है कि जैसे स्त्री मोतियोंके समूहसे गुंथी अलक ( बाल ) धारण करती है ॥ ६४ ॥

भावार्थः—जिसप्रकार प्रियपुरुषोंकी गोदमें कामिनी स्त्रियें बैठती हैं, वैसेही उस पर्वतके ऊर्ध्वभागमें बैठीहुई व जिसका गंगारूपी वस्त्र सरक गया है, अर्थात् जिसमेंसे गंगाजीका प्रवाह बह चला है, ऐसी उस अलकापुरीको तुम देखना । हे कामचारी मेघ ! ऐसा नहीं जो तुम उसको न पहचानसको; अर्थात्। पहचान लोगे । सतमंजली ऊंची हवेलियोंसे शोभायमान वह अलकापुरी तुह्मारा काल ( पर्जन्यकाल ) प्राप्त होनेसे, कामिनी स्त्री मोतियोंके जालसे गुंथीहुई वेणी जिसप्रकार धारण करती है, वैसेही जल झरतेहुए मेघोंके समूहोंको धारण करती है ॥ ६४ ॥

इति श्रीमहोपाध्यायमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया
व्याख्यया समेतो महाकविश्रीकालिदासविरचिते
मेघदूते काव्ये सभाषानुवादः पूर्वमेघः समाप्तः ।

# उत्तरमेघः ।

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
संगीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ १ ॥

**अन्वयः**—हे मेघ; यत्र ललितवनिताः सचित्राः संगीताय प्रहतमुरजाः मणिमयभुवः अभ्रंलिहाग्राः प्रासादाः विद्युत्वन्तम् सेन्द्रचापम् स्निग्धगम्भीरघोषम् अन्तस्तोयम् तुङ्गम् त्वाम् तैः तैः विशेषैः तुलयितुम् अलम् ॥ १ ॥

**विद्युत्वन्तमिति** ॥ यत्रालकायां ललिता रम्या वनिताः स्त्रियो येषु ते । सह चित्रैर्वर्तन्त इति सचित्राः ॥ "आलेख्याश्चर्ययोश्चित्रम्" इत्यमरः ॥ "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः । "वोपसर्जनस्य" इति सहशब्दस्य समासः ॥ संगीताय तौर्यत्रिकाय प्रहतमुरजास्ताडितमृदङ्गाः ॥ "मुरजा तु मृदङ्गे स्याड्ढक्कामुरजयोरपि" इति शब्दार्णवे ॥ मणिमया मणिविकारा भुवो येषु । अभ्रं लिहन्तीत्यभ्रंलिहान्यभ्रंकषाणि ॥ "वहाभ्रे लिहः" इति खश्प्रत्ययः । "अरुर्द्विष–" इत्यादिना मुमागमः ॥ अग्राणि शिखराणि येषां ते तथोक्ताः । अतितुङ्गा इत्यर्थः ॥ प्रासादा देवगृहाणि ॥ "प्रासादो देवभूभुजाम्" इत्यमरः ॥ विद्युतोऽस्य सन्तीति विद्युत्वन्तम् । सेन्द्रचापमिन्द्रचापवन्तम् । स्निग्धः श्राव्यो गम्भीरो घोषो गर्जितं यस्य तम् । अन्तरन्तर्गतं तोयं यस्य तम् । तुङ्गमुन्नतं त्वां तैस्तैर्विशेषैर्ललितवनितत्वादिधर्मैस्तुलयितुं समीकर्तुमलं पर्याप्ताः ॥ "अलं भूषणपर्याप्तिशक्तिवारणवाचकम्" इत्यमरः ॥ अत्रोपमानोपमेयभूतमेघप्रासादधर्माणां विद्युद्वनितादीनां यथासंख्यमन्योन्यसादृश्यान्मेघप्रासादयोः साम्यसिद्धिरिति । बिम्बप्रतिबिम्बभावेनेयं पूर्णोपमा । वस्तुतो भिन्नयोः परस्परसादृश्यादभिन्नयोरुपमानोपमेयधर्मयोः पृथगुपादानाद्बिम्बप्रतिबिम्बभावः ॥ १ ॥

**अन्वयार्थः**–हे ! मेघ जहां मनोहर स्त्री चित्रसहित संगीतके निमित्त बजायेहुए मुरज बाजेवाले मणिजटित भूमियुक्त आका-

शको छूनेवाले शिखरोंके अग्रभागयुक्त देवमंदिर बिजलीवाले इन्द्रधनुषसंयुक्त मनोहर गंभीर शब्दसे भीतर जलवाले तुझकू तिन तिन पर्मोसे समान करनेकू पूर्ण हैं ॥ १ ॥

भावार्थः—हे पयोद ! अलकापुरीके आकाशको स्पर्श करनेवाले जिनके शिखर हैं, ऐसे प्रासादसमूह, अनेक प्रकारकी बहुत २ विशेष वस्तुओंसे तुह्मारी समानता प्राप्त करते हैं, कारण कि; तुह्मारे भीतर सौदामिनी विलास करती है: वहांके समस्त धवरहरोंमें अनुपमरूप लावण्यवती युवतियां रहती हैं। तुममें इन्द्रधनुष शोभायमान है, प्रासादसमूहभी विचित्र विविधवर्णसे चित्रित होरहे हैं; तुह्मारा गर्जन स्निग्ध और गंभीर है, प्रासाद समूहमेंभी संगीतके साथ स्निग्ध-गंभीर ध्वनि मृदंगकी हुआ करती है। तुह्मारे भीतरे निर्मल जल भराहुआ है; प्रासादसमूहके भीतर सुनिर्मल मणिमय भूमि शोभायमान होती है । जैसे तुम ऊंचे हो, वैसेही प्रासादसमूहभी ऊंचे हैं; इन्हीं सब कारणोंसे अलकापुरीके मन्दर-समूह तुह्मारी बराबरी करनेको सम्पूर्ण समर्थ हुए हैं ॥ १ ॥

संप्रति सर्वदा सर्वर्तुसंपत्तिमाह—

हस्ते लीलाकमलमलके बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।
चूडापाशे नवकुरबकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥ २ ॥

अन्वयः—यत्र वधूनाम् हस्ते लीलाकमलम् अलके बालकुन्दानुविद्धम् आनने लोध्रप्रसवरजसा पाण्डुताम् नीता श्रीः चूडापाशे नवकुरबकम् कर्णे चारु शिरीषम् सीमन्ते त्वदुपगमजम् नीपम् [ अस्ति ] ॥ २ ॥

**हस्त इति** ॥ यत्रालकायां वधूनां स्त्रीणां हस्ते लीलार्थं कमलं लीलाकमलम् ॥ शरल्लिङ्गमेतत् । तदुक्तम्—"शरत्पङ्कजलक्षणा" इति ॥ अलके कुन्तले ॥ जातावेकवचनम् ॥ अलकेष्वित्यर्थः । बालकुन्दैः प्रत्यग्रमाघ्यकुसुमैरनुविद्धम् । अनुवेधो ग्रन्थनम् ॥ नपुंसके

भावे क्तः ॥ यद्यपि कुन्दानां शैशिरत्वमस्ति "माघ्यं कुन्दम्" इत्यभिधानात्तथापि हेमन्ते प्रादुर्भावः शिशिरे प्रौढत्वमिति व्यवस्थाभेदेन हेमन्तकार्यत्वमित्याशयेन बालेति विशेषणम् ॥ "अलकम्" इति प्रथमान्तपाठे सप्तमीप्रक्रमभङ्गः स्यात् । नाथस्तु नियतपुंलिङ्गताहानिश्चेति दोषान्तरमाह । तदसत् । "स्वभाववक्राण्यलकानि तासाम्" । "निर्धूतान्यलकानि पातितमुरः कृत्स्नोऽधरः खण्डितः" इत्यादिषु प्रयोगेषु नपुंसकलिङ्गतादर्शनात् ॥ आनने मुखे लोध्रप्रसवानां लोध्रपुष्पाणां शैशिराणां रजसा परागेण ॥ "प्रसवस्तु फले पुष्पे वृक्षाणां गर्भमोचने" इति विश्वः ॥ पाण्डुतां नीता श्रीः शोभा । चूडापाशे केशपाशे नवकुरवकं वासन्तः पुष्पविशेषः । कर्णे चारु पेशलं शिरीषं ग्रैष्मः पुष्पविशेषः । सीमन्ते मस्तककेशवीथ्याम् ॥ "सीमन्तमस्त्रियां मस्तकेशवीथ्यामुदाहृतम्" इति शब्दार्णवे ॥ तवोपगमः । मेघागम इत्यर्थः । तत्र जातं त्वदुपगमजम् । वार्षिकमित्यर्थः । नीपं कदम्बकुसुमम् । सर्वत्रास्तीति शेषः । अस्तिर्भवतिपरः । प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति न्यायात् । इत्थं कमलकुन्दादि तत्तत्कार्यसमाहाराभिधानादर्थात्सर्वर्तुसमाहारसिद्धिः । कारणं विना कार्यस्यासिद्धेरिति भावः ॥ २ ॥

**अन्वयार्थः**-जहां स्त्रियोंके हाथमें लीलाकमल,बालोंमें चमेलीके फूल विंधे हुए, मुखमें लोधके बने चूर्णसे पांडुताकू प्राप्त कीहुई शोभा, चूडापाशमें नया कुर्वकका फूल, कानमें मनोहर सिरसका फूल, मस्तकके जूडेमें तेरे आनेसे उत्पन्न हुआ कदम्बका फूल है ॥ २ ॥

**भावार्थः**—हे पयोद ! अलकापुरीमें प्रवेश करके तुम देखोगे कि वहांकी स्त्रियें हाथोंमें शरदऋतुके उत्पन्न हुए लीलाकमल धारण किये हैं; जुल्फजालमें हेमन्तऋतुके उत्पन्न हुए कुन्दके फूल गुथे हैं, मुखपर शिशिरऋतुमें उत्पन्नहुए लोधके फूलोंके परागसे पाण्डुवर्णताहै; केशोंके बीच वसन्तकालके उत्पन्न हुए नव-कुरवक सुमन गुंथे हैं; दोनो कानोमें ग्रीष्म ऋतुके उत्पन्न हुए शिरसके फूल, मांगमें तुह्मारे समागमसे उत्पन्न हुए वर्षाकालीन कदम्बफूल बराबर शोभायमान होरहे हैं ॥ २ ॥

यत्रोन्मत्तभ्रमरमुखराः पादपा नित्यपुष्पा
हंसश्रेणीरचितरशना नित्यपद्मा नलिन्यः ।
केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापा
नित्यज्योत्स्नाः प्रतिहततमोवृत्तिरम्याः प्रदोषाः॥३॥

अन्वयः—यत्र पादपाः नित्यपुष्पाः [ अतएव ] उन्मत्तभ्रमरमुखराः नलिन्यः नित्यपद्माः ( अतएव ) हंसश्रेणीरचितरशनाः भवनशिखिनः नित्यभास्वत्कलापाः [ अतएव ] केकोत्कंठाः प्रदोषाः नित्यज्योत्स्नाः [ अतएव ] प्रतिहततमोवृत्तिरम्याः (सन्ति)॥३॥

यत्रेति ॥ यत्रालकायां पादपा वृक्षाः । नित्यानि पुष्पाणि येषां ते तथा । न त्वृतुनियमादिति भावः । अत एवोन्मत्तैर्भ्रमरैर्मुखराः शब्दायमानाः । नलिन्यः पद्मिन्यो नित्यानि पद्मानि यासां तास्तथा न तु हेमन्तवर्जितनित्यर्थः । अत एव हंसश्रेणीभी रचितरशनाः ; नित्यं हंसपरिवेष्टिता इत्यर्थः । भवनशिखिनः क्रीडामयूरा नित्यं भास्वन्तः कलापा बर्हाणि येषां ते तथोक्ताः । न तु वर्षास्वेव । अत एव केकाभिरुत्कण्ठा उद्ग्रीवाः । प्रदोषा रात्रयो नित्या ज्योत्स्ना येषां ते । न तु शुक्लपक्ष एव । अत एव प्रतिहता तमसां वृत्तिर्व्याप्तिर्येषां ते च ते रम्याश्चेति तथोक्ताः ॥ ३ ॥

**अन्वयार्थः**–जहां वृक्ष नित्य फूलवाले हैं इसीकारण नित्य भौरोंके शब्द हैं. कमलिनी नित्य कमलोंसे युक्त हैं इसी कारण हंसपंक्तियोंसे निर्मितरशनावाली क्रीडाके मोर नित्य प्रकाशमान पुच्छवाले हैं इसीकारण ऊपरको ग्रीवा उठाये हैं रात्री सदा चांदनीयुक्त है इसी कारण नित्य अन्धकार दूर होनेसे शोभायमान है ॥३॥

**भावार्थः**—इस अलकापुरीके समुदायवृक्ष सब ऋतुओंमें फूला करते हैं और मतवाले भ्रमरगण सदांही उन वृक्षोंपर श्रवणमनोहर गुंजारव करते हैं. । इसी अलकापुरीकी तलैयें सदा खिलेहुए कमलफूलोंकी राशिसे विराजमान रहती है; हंसगण सदा उनको घेरकर अपूर्व शोभाका विस्तार करते हैं । यहांपर घरोंके पलाऊ मोरगण सदां आनन्दसे भरकूक माराकरते हैं; उनका रंग सदांही नयन–रंजन शोभा छिटकाया करता है । इस स्थानमें सदां चांदनीके रहनेसे रात्रिके समय अन्धकारकी अवाई दिखाई नहीं देती ॥ ३ ॥

आनन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तै-
र्नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात् ।
नाप्यन्यस्मात्प्रणयकलहाद्विप्रयोगोपपत्ति-
र्वित्तेशानां न च खलु वयो यौवनादन्यदस्ति ॥४॥

अन्वयः—यत्र वित्तेशानाम् आनन्दोत्थमेव नयनसलिलम् अन्यैः निमित्तैः न इष्टसंयोगसाध्यात् कुसुमशरजात् अन्यः तापः प्रणयकलहात् अन्यस्मात् विप्रयोगोपपत्तिः अपि न [ किंच ] यौवनात् अन्यत् वयः नास्ति खलु ॥ ४ ॥

आनन्देति ॥ यत्रालकायां वित्तेशानां यक्षाणाम् ॥ "वित्ताधिपः कुबेरः स्यात्प्रभौ धनिकयक्षयोः" इति शब्दार्णवे ॥ आनन्दोत्थमानन्दजन्यमेव नयनसलिलम् । अन्यैर्निमित्तैः शोकादिभिर्न । दिष्टसंयोगेन प्रियजनसमागमेन साध्यान्निर्वर्तनीयात् । न त्वप्रतीकार्यादित्यर्थः । कुसुमशरजान्मदनशरजादन्यस्तापो नास्ति प्रणयकलहादन्यस्मात्कारणाद्विप्रयोगोपपत्तिर्विरहप्राप्तिरपि नास्ति । किं च यौवनादन्यद्वयो वार्धकं नास्ति ॥ श्लोकद्वयं प्रक्षिप्तम् ॥ ४ ॥

अन्वयार्थः-जिस अलकामें यक्षोंके आनंदसे उठेहुए नेत्रोंके जलकू जो और निमत्तोंसे नहीं ( किन्तु ) प्रिय समागमके निवर्तनसे है, कामसे उत्पन्न होनेके सिवाय दूसरा ताप और प्रणयके क्लेश अतिरिक्त दूसरी प्रकारके वियोगकी आपत्तिभी नहीं और तरुणाईके सिवाय और अवस्थाभी निश्चय नहीं है ॥ ४ ॥

भावार्थः—इस अलकापुरीमें यक्षलोगोंकी आंखोंसे केवल आनन्दके आंसू निकलते हैं और किसी कारणसे नहीं । यहांपर प्रियजनोंके समागमसे शान्त होनेके कारण उत्पन्न हुए कामज्वरके सिवाय कभी दूसरा ज्वर नहीं होता । इस स्थानमें प्रेमकलहके अतिरिक्त किसी कारणसे विरह होनेकी सम्भावना नहीं । यहांपर युवा अवस्थाको छोडकर और कोई अवस्था नहीं होती॥४।

यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि
ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः ।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ५ ॥

अन्वयः—यस्याम् यक्षः उत्तमस्त्रीसहायः सितमणिमयानि [ अतएव ] ज्योतिश्छायाकुसुमरचितानि हर्म्यस्थलानि एत्य त्वद्गम्भीरध्वनिषु पुष्करेषु शनकैः आहतेषु कल्पवृक्षप्रसूतम् रतिफलम् मधु आसेवन्ते ॥ ५ ॥

यस्यामिति ॥ यस्यामलकायां यक्षा देवयोनिविशेषा उत्तमस्त्रीसहाया ललिताङ्गनासहचराः सन्तः सितमणिमयानि स्फटिकमणिमयानि चन्द्रकान्तमयानि वा । अत एव ज्योतिषां तारकाणां छायाः प्रतिबिम्बान्येव कुसुमानि तै रचितानि परिष्कृतानि ॥ "ज्योतिस्ताराग्निभाज्वालादृक्पुत्रार्थाध्वरान्मसु" इति वैजयन्ती ॥ एतेन पानभूमेरम्बरशोभत्वमुक्तम् । हर्म्यस्थलान्येत्य प्राप्य । त्वद्गम्भीरध्वनिरिव ध्वनिर्येषां तेषु पुष्करेषु वाद्यभाण्डमुखेषु ॥ "पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले" इत्यमरः ॥ शनकैर्मन्दमाहतेषु सत्सु ॥ एतच्च नृत्यगीतयोरप्युपलक्षणम् ॥ कल्पवृक्षप्रसूतं कल्पवृक्षस्य काङ्क्षितार्थप्रदत्वान्मध्वपि तत्र प्रसूतम् । रतिः फलं यस्य तद्रतिफलाख्यं मधु मद्यमासेवन्ते । आदृत्य पिबन्तीत्यर्थः ॥ "तालक्षीरसितामृतामलगुडोन्मत्तास्थिकालालयादार्विन्द्रद्रुममोरटेक्षुकदलीगुग्गुलुप्रसूनैर्युतम् । इत्थं चेन्मधुपुष्पभङ्ग्युपचितं पुष्पद्रुमूलावृतं क्वाथेन स्मरदीपनं रतिफलाख्यं स्वादु शीतं मधु ॥" इति मदिरार्णवे ॥ ५ ॥

अन्वयार्थः—जिसमें यक्ष स्त्रियोंसहित श्वेतमणिमय, तारोंकी छायारूपी पुष्पोंसे रचेहुए महलोंको प्राप्त होकर तेरी गंभीर ध्वनिकी समान ध्वनिवाले बाजोंके मुखमें शनैः २ ताडन किये कल्पवृक्षसे उत्पन्न हुए, रतिके फलरूपी मधुकू सेवन करते हैं॥५॥

भावार्थः—इस अलकापुरीमें, यक्षगण, निरुपम-रूपवती स्त्रियोंके साथ तारकावाली प्रतिबिम्बस्वरूप कुसुमराजि-विराजित स्फटिकमणिमय अटारियोंपर पहुंच तुह्मारी समान गंभीर ध्वनिकारी पुष्करनामक बाजेके मुखपर आघात कर वाद्योद्यमके साथ रतिफल सम्पादक कल्पवृक्षसे उत्पन्न हुए मदको पियेंगे॥ ५ ॥

**मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भि-**
**र्मन्दाराणामनुतटरुहां छायया वारितोष्णाः ।**
**अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः**
**संक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥ ६ ॥**

**अन्वयः—यत्र अमरप्रार्थिताः कन्याः मन्दाकिन्याः सलिलशिशिरैः अद्भिः सेव्यमानाः [ तथा ] अनुतटरुहाम् मन्दाराणाम् छायया वारितोष्णाः कनकसिकतामुष्टिनिक्षेपगूढैः [अतएव] अन्वेष्टव्यैः मणिभिः संक्रीडन्ते ॥ ६ ॥**

**मन्दाकिन्या इति** ॥ यत्रालकायाममरैः प्रार्थिताः। सुन्दर्य इत्यर्थः। कन्या यक्षकुमार्यः ॥ "कन्या कुमारिकानार्योः" इति विश्वः ॥ मन्दाकिन्या गङ्गायाः सलिलेन शिशिरैः शीतलैर्मरुद्भिः सेव्यमानाः सत्यः। तथानुतटं तटेषु रोहन्तीत्यनुतटरुहः ॥ क्विप् ॥ तेषां मन्दाराणां छाययानातपेन वारितोष्णाः शमितातपाः सत्यः कनकस्य सिकतासु मुष्टिभिर्निक्षेपेण गूढैः संवृतैरत एवान्वेष्टव्यैर्मृग्यैर्मणिभी रत्नैः संक्रीडन्ते। गुप्तमणिसंज्ञया दैशिकक्रीडया सम्यक्क्रीडन्तीत्यर्थः ॥ "क्रीडोऽनुसंपरिभ्यश्च" इत्यात्मनेपदम ॥ "रत्नादिभिर्वालुकादौ गुप्तैर्द्रष्टव्यकर्मभिः। कुमारीभिः कृता क्रीडा नाम्ना गुप्तमणिः स्मृता ॥ रासक्रीडा गूढमणिर्गुप्तकेलिस्तु लायनम। पिच्छकन्दुकदण्डाद्यैः स्मृता दैशिककेलयः ॥" इति शब्दार्णवे ॥ ६ ॥

**अन्वयार्थः**—जहां देवताओंसे प्रार्थना करीहुई कन्या गंगाके जलसे ठंडी वायुओंसे सेवन करीहुई तथा किनारोंके निकट उत्पन्न हुए मन्दारवृक्षोंकी छायासे दूरतापवाली, हो सुवर्णकी रजमें मुष्टियोंके निक्षेपसे व्याप्त, ( इसीकारण ) ढूंढने योग्य मणियोंकरके क्रीडा करती हैं ॥ ६ ॥

**भावार्थः**—इस अलकापुरीमें; देवतालोगभी जिनकी प्रार्थना करें, ऐसी निरुपमरूपसम्पन्न यक्षकन्यागण, मन्दाकिनीके किनारे लगेहुए मन्दारवृक्षोंकी छायासे अपने धूप-तापको निवारण कर, मन्दाकिनीके जलको छू आनेवाली समीरसे सेवित हो सुवर्णकी रजमें मुट्ठियोंके निक्षेपसे व्याप्त गुप्तमणि नामसे प्रसिद्ध खेल करनेमें निरंतर लगी रहाकरती हैं ॥ ६ ॥

**नीवीबन्धोच्छ्वसितशिथिलं यत्र बिम्बाधराणां**
**क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु।**
**अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपा-**
**न्ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ७ ॥**

अन्वयः—यत्र अनिभृतकरेषु प्रियेषु नीवीबन्धोच्छ्वसित-शिथिलम् क्षौमम् रागात् आक्षिपत्सु ह्रीमूढानाम् बिम्बाधराणा-म् चूर्णमुष्टिः अर्चिस्तुङ्गान् रत्नप्रदीपान् अभिमुखम् प्राप्य अ-पि विफलप्रेरणा भवति ॥ ७ ॥

नीवीति ॥ यत्रालकायामनिभृतकरेषु चपलहस्तेषु प्रियेषु । नीवी वसनग्रन्थिः ॥ "नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि" इति विश्वः ॥ सैव बन्धो नीवीबन्धः ॥ चूतवृक्षवदपौनरुक्त्यम ॥ तस्योच्छ्वसितेन त्रुटितेन शिथिलं क्षौमं दुकूलं रागाद्वाक्षिपत्स्वाहरत्सु सत्सु ह्रीमूढानां लज्जाविधुराणाम. । बिम्बं बिम्बिकाफलम. ॥ "बिम्बं फले बिम्बिकायाः प्रतिबिम्बे च मण्डले" इति विश्वः ॥ बिम्बमिवाधरो यासां तासां बिम्बाधराणां स्त्रीविशेषाणाम. ॥ "विशेषाः कामिनीकान्ताभीरुबिम्बाधराङ्गनाः" इति शब्दार्णवे ॥ चूर्णस्य कुङ्कुमादेर्मुष्टिः । अर्चिभिर्मयूखैस्तुङ्गान् ॥ "अर्चिर्मयूखशिखयोः" इति विश्वः ॥ रत्नान्येव प्रदीपानभिमुखं यथा तथा प्राप्यापि विफलप्रेरणा दीपनिर्वापणाक्षमत्वान्निष्फलक्षेपा भवति ॥ अत्राङ्गनानां रत्नप्रदीपनिर्वापणप्रवृत्त्या मौग्ध्यं व्यज्यते ॥ ७ ॥

अन्वयार्थः–जिस अलकामें चपल हाथवाले प्रियजनोंमें वसनग्रंथिके टूटनेसे शिथिल हुए वस्त्रकू प्रेमसे हरतेहुओंमें लज्जासे मूढ हुई बिम्बवत् अधरयुक्त बालाओंकी कुंकुमादिकी मुष्टि किरणोंसे उच्च हुये रत्नदीपोंके सन्मुख प्राप्त होकरभी विफल प्रेरणा ( दीपबुझानेमें असमर्थ ) होती हैं ॥ ७ ॥

भावार्थः—इस अलकापुरीमें संभोगके लोभी, चंचल हाथवाले कामीपुरुष अनुरागके वश हो नीवीबन्धके खुलनेसे खसकेहुए प्यारीके वस्त्रोंको जब दूर करना चाहते हैं; तब लाजके वश हो मुग्धा स्त्रियोंकरके दीपक बुझानेके अभिप्रायसे फेंकेहुए कुंकुमादि चुर्णकी मुट्ठी, सन्मुख प्रकाशित होते हुए, उज्ज्वलशिखासम्पन्न रत्नके दीपकमें लगकर उसके बुझानेमें विफल हो जाती है ॥ ७ ॥

**नेत्रा नीताः सततगतिना यद्विमानाग्रभूमी-**
**रालेख्यानां नवजलकणैर्दोषमुत्पाद्य सद्यः ।**
**शङ्कास्पृष्टा इव जलमुचस्त्वादृशो जालमार्गै-**
**र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ ८ ॥**

**अन्वयः**—हे मेघ, नेत्राः सततगतिना यद्विमानाग्रभूमीः नीताः त्वादृशाः जलमुचः आलेख्यानाम् नवजलकणैः दोषम् उत्पाद्य सद्यः शङ्कास्पृष्टा इव धूमोद्गारानुकृतिनिपुणाः जर्जराः जलमार्गैः निष्पतन्ति ॥ ८ ॥

**नेत्रेति** ॥ हे मेघ, नेत्रा प्रेरकेण सततगतिना सदागतिना वायुना॥ "मातरिश्वा सदागतिः" इत्यमरः ॥ यस्या अलकाया विमानानां सप्तभूमिकभवनानामग्रभूमीरुपरिभूमिका नीताः प्रापिताः । त्वमिव दृश्यन्त इति त्वादृशः । त्वत्सदृशाः इत्यर्थ ॥ "त्यदादिषु दृशोऽनालोचने कञ्च" इति कञ्प्रत्ययः ॥ जलमुचो मेघाः । आलेख्यानां सच्चित्राणाम् ॥ "चित्रं लिखितरूपाद्यं स्यादालेख्यं तु यत्नतः" इति शब्दार्णवे ॥ नवजलकणैर्दोषं स्फोटनमुत्पाद्य सद्यः शङ्कास्पृष्टा इव सापराधत्वाद्भयाविष्टा इव ॥ "शङ्का वितर्कभययोः" इति शब्दार्णवे ॥ धूमोद्गारस्य धूमनिर्गमस्यानुकृतावनुकरणे निपुणाः कुशला जर्जरा विशीर्णाः सन्तो जालमार्गैर्गवाक्षरन्ध्रैर्निष्पतन्ति निष्क्रामन्ति ॥ यथा केनचिदन्तःपुरसंचारवता दूतेन गूढवृत्त्या रहस्यभूमिं प्रापितास्तत्र स्त्रीणां व्यभिचारदोषमुत्पाद्य सद्यः साशङ्काः कृतवेशान्तरा जाराः क्षुद्रमार्गैर्निष्क्रामन्ति तद्वदिति ध्वनिः । प्रकृतार्थे शङ्कास्पृष्टा इवेत्युत्प्रेक्षा ॥ ८ ॥

**अन्वयार्थः**—हे मेघ ! प्रेरक सदागतिवाले वायुकरके जिसके महलोंकी अग्रभूमि प्राप्त की गई है, तेरीसमान मेघचित्रोंके नवीन जलकणोंसे दोषोंको उत्पन्न कर शीघ्र भयव्याप्त होनेकी समान धुयें निकलनेके अनुकरण करनेमें चतुर, विशीर्ण होकर जालमार्गोंके द्वारा निकलते हैं ॥ ८ ॥

**भावार्थः**—हे धराधर ! तुह्मारी समान जलदगण, इस अलकापुरीमें शीघ्रगामी प्रेरकसे अन्तःपुरवर्ती सतखण्डे घरोंके ऊपर पहुंच नये जलकणोंके छिडके जानेसे चित्रकी मूर्तियोंको दूषित कर शंकायुक्त हो मानो दूसरा वेष धारण कर झरोखेंके मार्गद्वारा धुयेंका निकलनेका अनुकरण कर बाहर निकल जाते हैं ॥ ८ ॥

**यत्र स्त्रीणां प्रियतमभुजालिङ्गनोच्छ्वासितानाम्-**
**अङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।**
**त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे**
**व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥९॥**

**अन्वयः**—यत्र निशीथे त्वत्संरोधापगमविशदैः चन्द्रपादैः स्फुटजललवस्यन्दिनः तन्तुजालावलम्बाः चन्द्रकान्ताः प्रियतमभुजालिङ्गनोच्छ्वासितानाम् स्त्रीणाम् सुरतजनिताम् अङ्गग्लानिम् व्यालुम्पन्ति ॥ ९ ॥

**यत्रेति** ॥ यत्रालकायां निशीथेऽर्धरात्रे ॥ "अर्धरात्रं निशीथौ द्वौ" इत्यमरः ॥ त्वत्संरोधस्य मेघावरणस्यापगमेन विशदैर्निर्मलैश्चन्द्रपादैश्चन्द्रमरीचिभिः ॥ "पादा रश्म्यङ्घ्रितुर्यांशाः" इत्यमरः ॥ स्फुटजललवस्यन्दिन उल्बणाम्बुकणस्राविणस्तन्तुजलावलम्बा वितानलम्बिसूत्रपुञ्जाधाराः । तद्गुणगुम्फिता इत्यर्थः । चन्द्रकान्ताश्चन्द्रकान्तमणयः । प्रियतमानां भुजैरालिङ्गनेपूच्छ्वासितानां प्रशिथिलीकृतानाम् । श्रान्त्या जलसेकाय वा शिथिलितालिङ्गनानामिति यावत् । स्त्रीणां सुरतजनितामङ्गग्लानिं शरीरखेदम् । अवयवानां ग्लानतामिति यावत् । व्यालुम्पन्त्यपनुदन्ति ॥ ९॥

**अन्वयार्थः**–जिस अलकामें आधीरातके समय मेघनिर्गत होनेसे स्वच्छ चंद्रमाकी किरणोंकरके स्फुटजलकण टपकानेवाले तन्तुसमूहोंको अवलम्बन कर चन्द्रकान्तमणि प्रियतमकी भुजा आलिंगनसे शिथिल स्त्रियोंकी कामकेलिसे उत्पन्न हुई अंगकी ग्लानियोंको दूर करती है ॥ ९ ॥

**भावार्थः**—इस अलकापुरीमें आधीरातके समय मेघरूपी आवरणके आनेसे, अत्यन्त-निर्मल चन्द्रकिरणोंके मेलसे अनन्त-जलकणवर्षी-वितान-लम्बि सूत्र-पुञ्ज-ग्रथित चन्द्रकान्त मणीसमूह; थकावटके मिटानेवाले, प्यारोंकी भुजाओंमें आलिंगनसे शिथिल हो गए हैं अंग जिनके, ऐसे स्त्रियोंकी रति करनेसे उत्पन्न हुई अंग-ग्लानिको दूर करती है ॥ ९ ॥

अक्षय्यान्तर्भवननिधयः प्रत्यहं रक्तकण्ठै-
रुद्गायद्भिर्धनपतियशः किंनरैर्यत्र सार्धम् ।
वैभ्राजाख्यं विबुधवनितावारमुख्यासहाया
बद्धालापा बहिरुपवनं कामिनो निर्विशन्ति ॥१०॥

**अन्वयः**—यत्र अक्षय्यान्तर्भवननिधयः विबुधवनितावारमुख्यासहायाः बद्धालापाः कामिनः प्रत्यहम् रक्तकण्ठैः धनपति-

यशः उद्गायद्भिः किन्नरैः सार्धम् वैभ्राजाख्यम् बहिरुपवनम् नि-र्विशन्ति ॥ १० ॥

**अक्षय्येति** ॥ यत्रालकायाम्। क्षेतुं शक्याः क्षय्याः ॥ "क्षय्यजय्यौ शक्यार्थे" इति निपातः । ततो नञ्समासः ॥ भवनानामन्तरन्तर्भवनम्॥"अव्ययं विभक्ति-" इत्यादिनाव्ययीभावः॥अक्षय्या अन्तर्भवने निधयो येषां ते तथोक्ताः॥ यथेच्छाभोगसंभावनार्थमिदं विशेषणम्॥ विबुधवनिता अप्सरसस्ता एव वारमुख्या वेश्यास्ता एव सहाया येषां ते तथोक्ताः ॥ "वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः । सत्कृता वारमुख्या स्यात्" इत्यमरः ॥ बद्धालापाः संभावितसंलापाः कामिनः कामुकाः प्रत्यहमहन्यहनि ॥ "अव्ययं विभक्ति-" इत्यादिना समासः ॥ रक्तो मधुरः कण्ठः कण्ठध्वनिर्येषां ते तैः सुन्दरकण्ठध्वनिभिर्धनपतियशः कुबेरकीर्तिमुद्गायद्भिरुच्चैर्गायनशीलैः । देवगानस्य गान्धारग्रामत्वात्तारतरं गायद्भिरित्यर्थः ॥ किनरैः सार्धं सह । विभ्राजस्येदं वैभ्राजम्। वैभ्राजमित्याख्या यस्य तद्वैभ्राजाख्यम् ॥ "विभ्राजेन गणेन्द्रेण त्रातं वैभ्राजमाख्यया" इति शंभुरहस्ये ॥ चैत्ररथस्य नामान्तरमेतत् ॥ बहिरुपवनं बाह्योद्यानं निर्विशन्त्यनुभवन्ति ॥ १० ॥

**अन्वयार्थः**–जहां अक्षय भीतरभवनकी सम्पत्ति, देवताओंकी स्त्री अप्सराही वेश्यासहायभूत होकर वार्तामें प्रवृत्तकामियोंको प्रतिदिन मनोहर कंठोंकरके कुबेरका यश ऊंचे स्वरसे गानेवाले किन्नरों-करके साथ, विभ्राजनामवाले बाह्य उद्यानमें प्रवेश करती हैं ॥ १० ॥

**भावार्थः**—इस अलकापुरीमें जिनके स्थानपर लक्ष्मी अखण्ड वास करती है, व अप्सराओंके साथ वर्तमान होकर जो शृङ्गारका आनन्द आलाप करते हैं, ऐसे विलासीजन प्रतिदिन मधुर व ऊंचे स्वरसे कुबेरजीका यश गानेवाले किन्नरोंके साथ वर्तमान वैभ्राजनामक उद्यानमें घूमते हैं ॥ १० ॥

गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः
पत्रच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च ।
मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैश्च हारै-
र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम्॥११॥

अन्वयः—यत्र कामिनीनाम् गत्युत्कम्पात् अलकपतितैः मन्दारपुष्पैः [तथा] पत्रच्छेदैः कर्णविभ्रंशिभिः कनकनलिनैः [तथा] मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैः हारैः सवितुः उदये नैशः मार्गः सूच्यते ॥ ११ ॥

गतीति ॥ यत्रालकायां कामिनीनामभिसारिकाणाम् । निशि भवो नैशो मार्गः सवितुरुदये सति गत्या गमनेनोत्कम्पश्चलनं तस्माद्धेतोरलकेभ्यः पतितैर्मन्दारपुष्पैः सुरतरुकुसुमैः । तथा पत्राणां पत्रलतानां छेदैः खण्डैः । पतितैरिति शेषः ॥ तथा कर्णेभ्यो विभ्रश्यन्तीति किर्णविभ्रंशीनि तैः कनकस्य कमलैः ॥ षष्ठ्या विवक्षितार्थलाभे सति मयटा विग्रहेऽध्याहारदोषः । एवमन्यत्राप्यनुसंधेयम् ॥ तथा मुक्ताजालैर्मौक्तिकसरैः । शिरोनिहितैरित्यर्थः । तथा स्तनयोः परिसरः प्रदेशस्तत्र छिन्नानि सूत्राणि येषां तैर्हारैश्च सूच्यते ज्ञाप्यते । मार्गपतितमन्दारकुसुमादिलिङ्गैरयमभिसारिकाणां पन्था इत्यनुमीयत इत्यर्थः ११

अन्वयार्थः–जहां स्त्रियोंके चलनेकी चंचलतासे बालोंसे गिरेहुए मन्दारके फूल, तथा पत्रलताओंके गिरने तथा कानोंसे गिरेहुए सुवर्णके कमल, तथा मोतियोंके जाल, ( तथा ) स्तनोंके स्थानसे टूटे सूत्रवाले हारोंकरके सूर्योदयमें रात्रिका मार्ग विदित होता है।११।

भावार्थः—इस अलकापुरीमें प्यारेके समीप गमनकरनेके कारण कांपनेसे, जुल्फोंसे गिरेहुए मन्दारके फूलोंसे, भ्रष्ट पत्ररचनासे, कानोंसे गिरेहुए-सुवर्णकमलसे, शिरमें लगेहुए मुक्ता-जालके गिरनेसे स्तनोंपर पहरेहुए सूत टूटे रत्नोंके हार खसकनेसे, सूर्यके उदयहुए पीछेभी अभिसारिणी स्त्रियोंका रात्रिकालीन अभिसार संचारमार्ग दिखाई दिया करता है ॥ ११ ॥

मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तं
प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम् ।
सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमोघै-
स्तस्यारम्भश्चतुरवनिताविभ्रमैरेव सिद्धः ॥ १२ ॥

अन्वयः—यत्र मन्मथः धनपतिसखम् देवम् साक्षात् वसन्तम् मत्वा भयात् षट्पदज्यम् चापम् प्रायः न वहति तस्य आरं-

भः सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येषु अमोघैः चतुरवनिताविभ्रमैः एव सिद्धः [ भवति ] ॥ १२॥

मत्वेति ॥ यत्रालकायां मन्मथः कामः। धनपतेः कुबेरस्य सखेति धनपतिसखः ॥ "राजाहःसखिभ्यष्टच्" ॥ तं देवं महादेवं साक्षाद्वसन्तं सखिस्नेहान्निजरूपेण वर्तमानं मत्वा ज्ञात्वा भयाद्धरेक्षणभयात्षट्पदा एव ज्या मौर्वी यस्य तं चापं प्रायः प्राचुर्येण न वहति न बिभर्ति ॥ कथं तर्हि तस्य कार्यसिद्धिरत आह—सभ्रूभङ्गेति ॥ तस्य मन्मथस्यारम्भः कामिजनविजयव्यापारः सभ्रूभङ्गं प्रहितानि प्रयुक्तानि नयनानि दृष्टयो येषु तैस्तथोक्तैः कामिन एव लक्ष्याणि तेष्वमोघैः। सफलप्रयोगैरित्यर्थः ॥ मन्मथचापोऽपि क्वचिदपि मोघः स्यादिति भावः ॥ चतुराश्च ता वनिताश्च तासां विभ्रमैर्विलासैरेव सिद्धो निष्पन्नः। यदनर्थकरं पाक्षिकफलं च तत्प्रयोगाद्वरं निश्चितसाधनप्रयोग इति भावः ॥ १२ ॥

**अन्वयार्थः**–जहां कामदेव धनपतिके सखा महादेवकू, साक्षात् वसन्त मानकर भयसे भौंरोंकी ज्यावाले धनुषकू बहुधा नहीं धारण करता, तिस कामका कामिजनोंमें व्यापार भृकुटिभङ्गसे प्रेरित किये नेत्रोंकरके कामियोंके लक्ष्यमें सफल चतुर स्त्रियोंके विलासहीसे सिद्ध होता है ॥ १२ ॥

**भावार्थः**—जिस अलकापुरीमें कुबेरजीके मित्र श्रीशंकरजीके प्रत्यक्ष रहनेके कारण भयभीत हुआ, भ्रमरपंक्तिकी डोरीवाले अपने धनुषको कामदेव प्रायः धारण नहीं करता। परन्तु वह कामिजन-विजयकार्य–जिसमें नेत्रकटाक्षका उपयोग किया हुआ है, जो कामीजनोंके हृदय अचूक बींधनेमें समर्थ है, ऐसी चतुर स्त्रियोंके हाव भाव विलासादिसेही सिद्ध होता है ॥ १२ ॥

"कचधार्यं देहधार्यं परिधेयं विलेपनम्। चतुर्धा भूषणं प्राहुः स्त्रीणामन्यच्च दैशिकम् ॥" इति रसाकरे। तदेवैतदाह—

**वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं**
**पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पान्।**
**लाक्षारागं चरणकमलन्यासयोग्यं च यस्या-**
**मेकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥ १३ ॥**

इतः परं चतुर्भिः श्लोकैरभिज्ञानान्तरमाह—

वापी चास्मिन्मरकतशिलाबद्धसोपानमार्गा
हैमैश्छन्ना विकचकमलैः स्निग्धवैदूर्यनालैः ।
यस्यास्तोये कृतवसतयो मानसं संनिकृष्टं
नाध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥१५॥

अन्वयः—अस्मिन् मरकतशिलाबद्धसोपानमार्गा स्निग्धवैदूर्यनालैः हैमैः विकचकमलैः छन्ना वापी [ अस्ति ] यस्याः तोये कृतवसतयः हंसाः त्वाम् प्रेक्ष्य अपि व्यपगतशुचः सन्निकृष्टमपि मानसम् न अध्यास्यन्ति ॥ १५ ॥

वापीति ॥ अस्मिन्मदीयागारे मरकतशिलाभिर्बद्धः सोपानमार्गो यस्याः स तथोक्ता । विदूरे भवा वैदूर्याः ॥ "विदूराञ्ञ्यः" इति ञ्यप्रत्ययः ॥ वैदूर्याणां विकारा वैदूर्याणि ॥ विकारार्थेऽण्प्रत्ययः ॥ स्निग्धानि वैदूर्याणि नालानि येषां तैर्हैमैः सौवर्णैर्विकचकमलैश्छन्ना वापी च । अस्तीति शेषः ॥ यस्या वाप्यास्तोये कृतवसतयः कृतनिवासा हंसास्त्वां मेघं प्रेक्ष्यापि व्यपगतशुचो वर्षाकालेऽपि व्यपगतकलुषजलजत्वाद्वीतदुःखाः सन्तः संनिकृष्टं संनिहितम् । सुगममपीत्यर्थः । मानसं मानससरो नाध्यास्यन्ति नोत्कण्ठया स्मरिष्यन्ति ॥ "आध्यानमुत्कण्ठास्मरणम्" इति काशिकायाम् ॥ १५ ॥

अन्वयार्थः—इसमें मरकतमणिकी शिलाओंकी सीढी बनीहुई और मनोहर वैदूर्य्यमणिके नालवाले सोनेके खिले कमलोंसे युक्त एक बावडी है । जिसके जलमें वास करनेहारे हंस तुझकू देखकर वर्षाकालमेंभी कलुषजलरहित होनेके कारण निकटवर्ती मानससरोवरको उत्कंठासे नहीं स्मरण करते हैं ॥ १५ ॥

भावार्थः—इस हमारे भवनमें तुम देखोगे कि चमकीली वैदूर्य मणियोंके मृणालसे युक्त, खिलेहुए सुवर्णमय कमलफूलोंकी राशिसे विराजमान रमणीकवापी शोभायमान होरही है । उसमें उतरनेके लिये मरकतमणिकी पैरियें बनाई गई हैं । जो हंस इस वापीके जलमें वास करते हैं, वह तुमको उदित हुआ देखकरभी जलकलुषतादि क्लेशोंके न होनेसे अति निकट रहे मानससरोवरपर जानेकी इच्छा करके उत्कंठित नहीं होते ॥ १५ ॥

तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः।
मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥ १६ ॥

**अन्वयः**—तस्या तीरे पेशलैः इन्द्रनीलैः रचितशिखरः कनककदलीवेष्टनप्रेक्षणीयः क्रीडाशैलः [अस्ति] हे सखे उपान्तस्फुरिततडितम् त्वाम् प्रेक्ष्य मद्गेहिन्याः प्रियः इति कातरेण चेतसा तमेव स्मरामि ॥ १६ ॥

**तस्या इति** ॥ तस्या वाप्यास्तीरे पेशलैश्चारुभिः ॥ "चारौ दक्षे च पेशलः" इत्यमरः ॥ इन्द्रनीलैः रचितशिखरः । इन्द्रनीलमणिमयशिखर इत्यर्थः । कनककदलीनां वेष्टनेन परिधिना प्रेक्षणीयो दर्शनीयः क्रीडाशैलः। अस्तीति शेषः ॥ हे सखे, उपान्तेषु प्रान्तेषु स्फुरितास्तडितो यस्य तत्तथोक्तम् ॥ इदं विशेषणं कदलीसाम्यार्थमुक्तम् ॥ इन्द्रनीलसाम्यं तु मेघस्य स्वाभाविकमित्यनेन सूच्यते ॥ त्वां प्रेक्ष्य मद्गेहिन्याः प्रिय इति हेतोः । तस्य शैलस्य मद्गृहिणीप्रियत्वाद्धेतोरित्यर्थः ॥ कातरेण भीतेन चेतसा ॥ भयं चात्र सानन्दमेव । "वस्तूनामनुभूतानां तुल्यश्रवणदर्शनात्। श्रवणात्कीर्तनाद्वापि सानन्दा भीर्यथा भवेत् ॥" इति रसाकरे दर्शनात् ॥ तमेव क्रीडाशैलमेव स्मरामि ॥ एवकारो विषयान्तरव्यवच्छेदार्थः । सदृशवस्त्वनुभवादिष्टार्थस्मृतिर्जायत इत्यर्थः। अत एवात्र स्मरणाख्योऽलंकारः । तदुक्तम्—"सदृशानुभवादन्यस्मृतिः स्मरणमुच्यते" इति ॥ निरुक्तकारस्तु "त्वां तमेव स्मरामि" इति योजयित्वा मेघे शैलत्वारोमपाचष्ट । तदसंगतम्। अद्वयाकारारोपस्य पुरोवर्तिन्यनुभवात्मकत्वेन स्मरतिशब्दप्रयोगानुपपत्तेः ॥ शैलत्वभावनास्मृतिरित्यपि नोपपद्यते । भावनायाः स्मृतित्वे प्रमाणाभावादनुभवायोगात्सादृश्योपन्यासस्य वैयर्थ्याच्च विसदृशेऽपि शालग्रामे हरिभावनादर्शनादिति ॥ १६ ॥

**अन्वयार्थः**-उसीके किनारे मनोहर इन्द्रनील मणियोंसे रचे शिखरवाला, सुवर्णमय केलेके घेरनेसे दर्शनीय क्रीडापर्वत है । हे मित्र ! पार्श्वोंमें स्फुरायमान विजलीवाले तुझको देखकर मेरी गृहिणी-

का प्यारा है, इसकारण व्याकुल चित्तसे उसीको स्मरण करता हूं ॥ १६ ॥

भावार्थः—इस सरोवरके कोनेमें एक रमणीक क्रीडापर्वत है, कि जिसके शिखर सुन्दर नीलमणियोंके बनेहुए हैं; सुरम्य कदलीवनका वेष्टन होनेके कारण यह अति दर्शनीय दीखता है। हे मित्र! वास्तवमें जिसके आसपास बिजली चमकती है, ऐसे तुम्हें देखकर भयचकित व आनन्दयुक्त अन्तःकरणसे मुझे मेरी स्त्रीका प्यारा वह क्रीडापर्वत याद आता है ॥ १६ ॥

रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरबकवृतेर्माधवीमण्डपस्य।
एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यो वदनमदिरां दोहदच्छद्मनास्याः ॥ १७ ॥

अन्वयः—अत्र कुरबकवृतेः माधवीमण्डपस्य प्रत्यासन्नौ चलकिसलयः रक्ताशोकः कान्तः केसरः एकः मयासह तव सख्याः वामपादाभिलाषी अन्यः दोहदच्छद्मना अस्याः वदनमदिराम् काङ्क्षति ॥ १७ ॥

रक्तेति ॥ अत्र क्रीडाशैले कुरबका एव वृतिरावरणं यस्य तस्य। मधौ वसन्ते भवा माधव्यस्तासां मण्डपस्तस्यातिमुक्तलतागृहस्य ॥ "अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता" इत्यमरः ॥ प्रत्यासन्नौ संनिकृष्टौ चलकिसलयं चलपल्लवः। अनेन वृक्षस्य पादताडनेषु प्राञ्जलित्वं व्यज्यते। रक्ताशोकः। रक्तविशेषणं तस्य स्मरोद्दीपकत्वादुक्तम्। "प्रसूनैरशोकस्तु श्वेतो रक्त इति द्विधा। बहुसिद्धिकरः श्वेतो रक्तोऽत्र स्मरवर्धनः ॥" इत्यशोककल्पे दर्शनात् ॥ कान्तः कमनीयः केसरो बकुलश्च ॥ "अथ केसरे। बकुलो वञ्जुलः" इत्यमरः ॥ स्त इति शेषः ॥ एकस्तयोरन्यतरः ॥ प्राथमिकत्वादशोक इत्यर्थः। मया सह तव सख्याः। स्वप्रियाया इत्यर्थः ॥ वामपादाभिलाषी। दोहदच्छद्मनेत्यत्रापि संबन्धनीयम् ॥ स चाहं च। अभिलाषिणावित्यर्थः ॥ अन्यः केसरः। दोहदं वृक्षादीनां प्रसवकारणं संस्कारद्रव्यम् ॥ "तरुगुल्मलतादीनामकाले कुशलैः कृतम्। पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रिया ॥" इति शब्दार्णवे ॥ तस्य छद्मना व्याजेन ॥ "कपटो-

ऽस्त्री "व्याजदम्भोपधयश्छद्मकैतवे" इत्यमरः ॥ अस्यास्तव सख्या वदनमदिरां गण्डूषमद्यं काङ्क्षति ॥ मया सहेत्यत्रापि संबन्धनीयम् ॥ अशोकबकुलयोः स्त्रीपादताडनगण्डूषमदिरे दोहदमिति प्रसिद्धिः ॥ "स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति बकुलः सीधुगण्डूषसेकात्पादाघातादशोकस्तिलककुरबकौ वीक्षणालिङ्गनाभ्याम् । मन्दारो नर्मवाक्यात्पटुमृदुहसनाच्चम्पको वक्त्रवाताच्चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात्कर्णिकारः" ॥ १७ ॥

अन्वयार्थः—इस क्रीडापर्वतमें, कुरवक वृक्षोंके आवरणवाले चमेलीके मण्डपके निकट चलायमान कोंपलवाला रक्त अशोक है । तथा मनोहर एक बकुल मेरे सहित तेरी सखीके वामचरणकी इच्छा करनेवाला और दूसरा प्रसवके कारण इस- ( तेरीसखी ) के मुखकी मदिराकी इच्छा करता है ॥ १७ ॥

भावार्थः—स्तनयित्नो ! इस क्रीडापर्वतपर कुरबकारगणविभूषित माधवीलताके निकट चंचल कोंपलसे शोभायमान लाल अशोकका वृक्ष, और अत्यन्त रमणीयता देनेवाला बकुलका वृक्ष शोभा विस्तार करता है । इन दोनों वृक्षोंमें पहला दोहदच्छलसे अर्थात् अकालमें पुष्पादि फुलानेवाले संस्कार विशेष द्रव्यके छलसे मेरे सहित तुह्मारी सखीके बांये पैरके आघातकी इच्छा करता है, और ऐसेही दूसरा वृक्षभी उसके वदनकी मदिराको चाहता है ॥ १७ ॥

तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।
तालैः शिञ्जावलयसुभगैर्नर्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥१८॥

अन्वयः—च तन्मध्ये अनतिप्रौढवंशप्रकाशैः मणिभिः मूले बद्धा स्फटिकफलका काञ्चनी वासयष्टिः [ अस्ति ] शिञ्जावलयसुभगैः तालैः मे कान्तया नर्तितः वः सुहृत् नीलकण्ठः दिवसविगमे याम् अध्यास्ते ॥ १८ ॥

तन्मध्य इति ॥ किं चेति चार्थः ॥ तन्मध्ये तयोर्वृक्षयोर्मध्येऽनतिप्रौढानामनतिकठोराणां वंशानां प्रकाश इव प्रकाशो येषां तैस्तरु-

शोणमन्दर्शार्थैर्मरकतमणिभिर्मूले बद्धा। कृतवेदिकेत्यर्थः॥ स्फटिकं स्फटिकमयं फलकं पीठं यस्याः सा। काञ्चनस्य विकारः काञ्चनी सौवर्णी वासयष्टिर्निवासदण्डः। अस्तीति शेषः॥ शिञ्जा भूषणध्वनिः॥ "भूषणानां तु शिञ्जितम्" इत्यमरः॥ भिदादित्वादङ्॥ शिञ्जितमन्यं नाटक्यादिर्भ तु इत्यादिः॥ शिञ्जाप्रधानानि वलयानि तैः सुभगा रम्यास्तैस्तालैः करतलवादनैर्मम कान्तया नर्तितो वो युष्माकं सुहृत्सखा नीलकण्ठो मयूरः॥ "मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्" इत्यमरः॥ दिवसविगमे सायंकाले यां यष्टिकामध्यास्ते। यस्यामास्त इत्यर्थः॥ "अधिशीङ्स्थासां कर्म" इति कर्मत्वाद्द्वितीया॥ "तत्रागारम्" इत्यारभ्य पञ्चसु श्लोकेषु समृद्धवस्तुवर्णनादुदात्तालंकारः। तदुक्तम्—"तदुदात्तं भवेद्यत्र समृद्धं वस्तु वर्ण्यते" इति॥ न चैषा स्वभावोक्तिर्भाविकं वा तत्र तथास्थितवस्तुवर्णनात्। अत्र तु "कविप्रतिभोत्थापितसंभाव्यमानैश्वर्यशालिवस्तुवर्णनादारोपितविषयत्वमिति ताभ्यामस्य भेदः" इत्यलंकारसर्वस्वकारः॥१८॥

अन्वयार्थः–किंच उनके बीचमें सुकुमार वंशोंके प्रकाशकी समान मणियोंकरके मूलमें जटित बिल्लौरमय पीठवाला सुवर्णका निवासदंड है ध्वनिवाले कंकणोंसे मनोहर तालियोंद्वारा मेरी कान्ताकरके नचायाहुआ तेरा प्रिय मयूर दिन बीतेपर जिसमें विश्राम करता है॥ १८॥

भावार्थः—हे जलद! इन दोनों वृक्षोंके बीचमें बिना पकेहुये नये बासकी समान शोभायमान मरकतमणिमय चबूतरेसे जिसकी जड बंधीहुई, ऐसा स्फटिकमय पीठयुक्त सुवर्णमय बांसदण्ड ( पक्षियोंके बैठनेका अड्डा ) विद्यमान है। दिन ढलनेके समय हमारी प्यारीकरके कंकणोंकी झुनझुनाहटयुक्त शुभ हाथोंकी तालसे नाचताहुआ तुम्हारा सुहृद नीलकण्ठ इस वासयष्टि (पक्षियोंके बैठनेके अड्डे) पर बैठ जाता है॥ १८॥

एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथा
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम्॥१९

**अन्वयः**—हे साधो ! हृदयनिहितैः एभिः लक्षणैः द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ दृष्ट्वा नूनम् अधुना मद्वियोगेन क्षामच्छायम् भवनम् लक्षयेथाः [ तथाहि ] सूर्यापाये कमलम् स्वाम् अभिख्याम् न पुष्यति खलु ॥ १९ ॥

एभिरिति ॥ हे साधो निपुण ॥ "साधुः समर्थो निपुणो वा" इति काशिकायाम् । हृदयनिहितैः । अविस्मृतैरित्यर्थः ॥ एभिः पूर्वोक्तैर्लक्षणैस्तोरणादिभिरभिज्ञानैर्द्वारोपान्ते ॥ एकवचनमविवक्षितम् ॥ द्वारपार्श्वयोरित्यर्थः ॥ लिखिते वपुषी आकृती ययोस्तौ तथोक्तौ शङ्खपद्मौ नाम निधिविशेषौ ॥ "निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेः" इत्यमरः ॥ दृष्ट्वा च नूनं सत्यमधुनेदानीम् ॥ "अधुना" इति निपातः ॥ मद्वियोगेन मम प्रवासेन क्षामच्छायं मन्दच्छायमुत्सवोपरमात्क्षीणकान्तिभवनं मद्गृहं लक्षयेथा निश्चिनुयाः । तथाहि । सूर्यापाये सति कमलं पद्मं स्वामात्मीयामभिख्यां शोभाम् ॥ "अभिख्या नामशोभयोः" इत्यमरः ॥ न पुष्यति नोपचिनोति खलु । सूर्यविरहितं पद्ममिव पतिविरहितं गृहं न शोभत इत्यर्थः ॥ १९ ॥

**अन्वयार्थः**—हे चतुर! हृदयमें रक्खेहुए इन लक्षणोंसे द्वारके पार्श्वमें लिखी हुई आकृतिवाले शंख और कमलकू देखकर निश्चय मेरे वियोगसे उत्सवक्षीण भवनको देखेगा ( क्योंकि ) सूर्यके न होनेपर कमल अपनी शोभाको पुष्ट नहीही करता ॥ १९ ॥

**भावार्थः**—हे सुनिपुण ! मैने जो अपने घरके इन लक्षणोंका वर्णन किया वह भलीभांति हृदयमें धारण कर, द्वारकी दोनों बगलोंमें विचित्र पद्म और शंखको देख तुम हमारे घरको पहचानलेना, हे सखे! हमको ऐसा जानपडता है कि इस समय हमारा घर मेरे वियोगसे शोभाहीन होगया है; कारण कि सूर्यके छिपजानेपर कमल अपनी पहलीसी शोभाको कभी धारण नहीं करता है ॥ १९ ॥

निजगृहनिश्चयानन्तरं कृत्यमाह—

**गत्वा सद्यः कलभतनुतां शीघ्रसंपातहेतोः**
**क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः ।**
**अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं**
**खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ २० ॥**

अन्वयः—हे मेघ, शीघ्रसम्पातहेतोः सद्यः कलभतनुताम् गत्वा प्रथमकथिते रम्यसानौ क्रीडाशैले निषण्णः अल्पाल्पभासम् खद्योतालीविलसितनिभाम् विद्युदुन्मेषदृष्टिम् अन्तर्भवनपतिताम् कर्तुम् अर्हसि ॥ २० ॥

गत्वेति ॥ हे मेघ, शीघ्रसंपात एव हेतुस्तस्य । शीघ्रप्रवेशार्थमित्यर्थः ॥ "षष्ठी हेतुप्रयोगे" इति षष्ठी ॥ "संपातः पतने वेगे प्रवेशे वेदसंविदि" इति शब्दार्णवे ॥ सद्यः सपदि कलभस्य करिपोतस्य तनुरिव तनुर्यस्य तस्य भावस्तत्तामल्पशरीरतां गत्वा प्राप्य प्रथमकथिते "तस्यास्तीरे" इत्यादिना पूर्वोद्दिष्टे रम्यसानौ । निषीदनयोग्य इत्यर्थः । क्रीडाशैले निषण्ण उपविष्टः सन् । अल्पाल्पप्रकारा भाः प्रकाशो यस्यास्ताम् ॥ "प्रकारे गुणवचनस्य" इति द्विरुक्तिः ॥ खद्योतानामाली तस्या विलसितेन स्फुरितेन निभां समानां विद्युदुन्मेषो विद्युत्प्रकाशः स एव दृष्टिस्तां भवनस्यान्तरन्तर्भवनं तत्र पतितां प्रविष्टां कर्तुमर्हसि । यथा कश्चित्किंचिदन्विष्यन्क्वचिदुन्नते स्थित्वा शनैः शनैरतितरां द्राघीयसीं दृष्टिमिष्टदेशे पातयति तद्वदित्यर्थः ॥ २० ॥

अन्वयार्थः—हे मेघ ! शीघ्र प्रवेश करनेकेकारण तत्काल हाथीके बच्चेकी समान छोटेपनको प्राप्तहोकर, प्रथम कहेहुए शोभायमान प्रान्तवाले क्रीडापर्वतमें स्थित हुआ, थोडी कान्तिवाले पटवीजनोंकी पङ्क्तिके विलासकी समान बिजलीके प्रकाशरूपी दृष्टिकूं भवनके अन्तर प्रवेश करनेको योग्य है ॥ २० ॥

भावार्थः—हे सखे ! इसके अनन्तर तुम शीघ्र प्रवेश करनेवाले होकर, तत्काल बालगजका रूप धारण कर पहले कहेहुए सुन्दर शिखरदार क्रीडापर्वतपर बैठ जिसका तेज अति अल्प है; और जो खद्योत-पंक्ति समान चमकनेवाली तुह्मारी विद्युत्स्फुरणारूप दृष्टि है उसको हमारे घरके मध्यभागमें डालनेकेलिये तुम योग्य हो ॥ २० ॥

संप्रति दृष्टिपातफलस्याभिज्ञानं श्लोकद्वयेनाह—

**तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी**
**मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।**
**श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां**
**या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥ २१ ॥**

**अन्वयः**—तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः श्रोणीभारात् अलसगमना स्तनाभ्याम् स्तोकनम्रा युवतिविषये धातुः आद्या सृष्टिरिव या स्यात् ॥ २१ ॥

**तन्वीति** ॥ तन्वी कृशाङ्गी । न तु पीवरी ॥ "श्लक्ष्णं दभ्रं कृशं तनु" इत्यमरः ॥ "वोतो गुणवचनात्" इति ङीष् ॥ श्यामा युवतिः ॥ "श्यामा यौवनमध्यस्था" इत्युत्पलमालायाम् ॥ शिखराण्येषां सन्तीति शिखरिणः कोटिमन्तः ॥ "शिखरं शैलवृक्षाग्रकक्षापुलककोटिषु" इति विश्वः ॥ शिखरिणो दशना दन्ता यस्याः सा । एतेनास्या भाग्यवत्त्वं पत्यायुष्करत्वं च सूच्यते । तदुक्तं सामुद्रिके—"स्निग्धाः समानरूपाः सुपङ्क्तयः शिखरिणः श्लिष्टाः । दन्ता भवन्ति यासां तासां पादे जगत्सर्वम् ॥ ताम्बूलरसरक्तेऽपि स्फुटभासः समोदयाः । दन्ताः शिखरिणो यस्या दीर्घं जीवति तत्प्रियः ॥" इति ॥ पक्वं परिणतं बिम्बं बिम्बिकाफलमिवाधरोष्ठो यस्याः सा पक्वबिम्बाधरोष्ठी ॥ "शाकपार्थिवादित्वान्मध्यमपदलोपी समासः" इति वामनः ॥ "नासिकोदरोष्ठ–" इत्यादिना ङीष् ॥ मध्ये क्षामा । कृशोदरीत्यर्थः । चकितहरिण्याः प्रेक्षणानीव प्रेक्षणानि दृष्टयो यस्याः सा तथोक्ता ॥ एतेनास्याः पद्मिनीत्वं व्यज्यते । तदुक्तं रतिरहस्ये पद्मिनीलक्षणप्रस्तावे—"चकितमृगदृशाभे प्रान्तरक्ते च नेत्रे" इति ॥ निम्ननाभिर्गम्भीरनाभिः ॥ अनेन नारीणां नाभिगाम्भीर्यान्मदनातिरेक इति कामसूत्रार्थः सूच्यते । श्रोणीभारादलसगमना मन्दगामिनी । न तु जघनदोषात् ॥ स्तनाभ्यां स्तोकनम्रेषदवनता । न तु वपुर्दोषात् ॥ युवतय एव विषयस्तस्मिन्युवतिविषये । युवतीरधिकृत्येत्यर्थः । धातुर्ब्रह्मण आद्या सृष्टिः प्रथमशिल्पमिव स्थितेत्युत्प्रेक्षा ॥ प्रथमनिर्मिता युवतिरियमेवेत्यर्थः ॥ प्रायेण शिल्पिनां प्रथमनिर्माणे प्रयत्नातिशयवशाच्छिल्पनिर्माणसौष्ठवं दृश्यत इत्याद्यविशेषणम् । तथा चास्मिन्प्रपञ्चे न कुत्राप्येवंविधं रमणीयं रमणीरत्नेष्वस्तीति भावः । तदेवंभूता या स्त्री तत्रान्तर्भवने स्यात् । तत्र निवसेदित्यर्थः । तामित्युत्तरश्लोकेन संबन्धः ॥ २१ ॥

**अन्वयार्थः**—सूक्ष्माङ्गी युवती, कोटियुक्त दांतोवाली, पक्के बिम्बफलकी समान ओष्ठवाली, मध्यस्थान ( कटिदेश ) में सूक्ष्म

चकित हरिणीकी समान देखनेहारी, गंभीरनाभियुक्त, नितम्ब-भारसे धीरे २ चलनेहारी, स्तनोंके भारसे कुछ नम्र, स्त्रियोंमें विधाताकी प्रथम बनाई मूर्त्तिकी समान जो हो ॥ २१ ॥

भावार्थः—हे सखे! तुम देखोगे कि हमारी प्यारी श्यामा कुन्द-कलीसमान नोंकदार दांतवाली, पकेहुए बिम्बफलकी समान अधरवाली, पतली कमरवाली, भयभीत हरिणीके समान चंचल नेत्रवाली, गम्भीर नाभिवाली, कटिपश्चातभागके बोझसे अतिमन्द गमनवाली, स्तनोंके भारसे कुछेक बांकी हुई है। तुम इसको देखकर विचार करोगे कि युवती-सृष्टिकरनेके विषयमें, ब्रह्माजीकी प्रथम शिल्प-निपुणता यही है ॥ २१ ॥

तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम्॥२२॥

अन्वयः—सहचरे मयि दूरीभूते चक्रवाकीमिव परिमितकथाम् एकाम् ताम् मे द्वितीयम् जीवितम् जानीथाः गाढोत्कण्ठाम् बालाम् गुरुषु एषु दिवसेषु शिशिरमथिताम् पद्मिनीं वा अन्यरूपाम् जाताम् अहम् मन्ये ॥ २२ ॥

**तामिति** ॥ सहचरे सहचारिणि। अनेन वियोगासहिष्णुत्वं व्यज्यते। मयि दूरीभूते दूरस्थिते सति। सहचरे चक्रवाके दूरीभूते सति चक्रवाकीं चक्रवाकवधूमिव ॥ "जातेरस्त्रीविषयादयोपधात्" इति ङीष् ॥ परिमितकथां परिमितवाचम्। एकामेकाकिनीं स्थितां तामन्तर्भवनगतां मे द्वितीयं जीवितं जानीथाः। जीविततुल्यां मत्प्रेयसीमवगच्छेरित्यर्थः। "तन्वी" इत्यादिपूर्वलक्षणैरिति शेषः ॥ लक्षणानामन्यथाभावभ्रममाशङ्क्याह—गाढेति ॥ गाढोत्कण्ठां प्रबलविरहवेदनाम्। "रागे त्वलब्धविषये वेदना महती तु या। संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः ॥" इत्यभिधानात् ॥ बालां गुरुषु विरहमहस्त्वेषु वर्तमानेषु दिवसेषु गच्छत्सु सत्सु शिशिरेण शिशिरकालेन मथितां पद्मिनीं वा पद्मिनीमिव ॥ "इववद्वायथाशब्दौ" इति दण्डी ॥

अन्यरूपां पूर्वविपरीताकारां जातां मन्ये । हिमहतपद्मिनीव विरहेणान्यादृशी जातेति तर्कयामीत्यर्थः । एतावता नेयमन्येति भ्रमितव्यमिति भावः ॥ २२ ॥

**अन्वयार्थः**—सहगामी मेरे दूर होनेपर चक्रवाकीकी समान थोडी बोलनेवाली अकेली उसे मेरे दूसरे जीवनकी समान जानना। अत्यन्त उत्कंठावाली बालाकू, बडइन दिनोंमें शिशिरसे मथीहुई पद्मिनीकी समान अथवा दूसरे आकारकू प्राप्त हुई मैं मान्ताहूं ॥ २२ ॥

**भावार्थः**—हे सखे ! उस मितभाषिणी स्त्रीकोही हमारे जीवनका दूसरा स्वरूप और बाहरी प्राणस्वरूप जानो । साथी चक्रवाक दूर होनेपर, अकेली चकवीकी समान उसको मेरे विरहकेमारे अकेली और कातर देखोगे; मैं जानताहूं कि इन विरह-विषम दिनोंके बीतनेसे, अति प्रबल विरहव्यथासे व्याकुल हुई, वह बाला बरफ पडनेसे जलीहुई कमलिनीके समान दूसरे रूपवाली होगई है ॥ २२ ॥

**नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियाया**
**निःश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ।**
**हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वा-**
**दिन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्ति ॥ २३ ॥**

**अन्वयः—प्रबलरुदितोच्छूननेत्रम् निःश्वासानाम् अशिशिरतया भिन्नवर्णाधरोष्ठम् हस्तन्यस्तम् लम्बालकत्वात् असकलव्यक्ति तस्याः प्रियायाः मुखम् त्वदनुसरणक्लिष्टकान्तेः इन्दोः दैन्यम् बिभर्ति नूनम् ॥ २३ ॥**

**नूनमिति** ॥ प्रबलरुदितेनोच्छूने उच्छ्वसिते नेत्रे यस्य तत् ॥ उच्छूनेति श्वयतेः कर्तरि क्तः ॥ "आदितश्च" इति निष्ठानत्वम् । "वचिस्वपि–" इत्यादिना संप्रसारणम् । "संप्रसारणाच्च" इति पूर्वरूपत्वम् । "हलः" इति दीर्घः ॥ "च्छ्वोः शूडनुनासिके च" इत्यूठादेशे कृते रूपसिद्धिरिति वर्तमानसामीप्यप्रक्रिया प्रामादिकीत्युत्प्रेक्षा । तथा सति धातोरिकारस्य गत्यभावादूठादेशे छोरन्त्यत्वेन विशेषणाच्चेति ॥ एतेन विषादो व्यज्यते । निःश्वासानामशिशिरतयान्तस्तापोष्णत्वेन भिन्नवर्णो विच्छायोऽधरोष्ठो यस्य तत् । हस्ते न्यस्तं

उच्छूननयनम् । एतेन चिन्ता व्यज्यते ॥ लम्बालकत्वात्संस्काराभावाल्ल-म्बमानालकत्वादसकलव्यक्त्यसंपूर्णाभिव्यक्ति तस्याः प्रियाया मुखं त्वदनुसरणेन त्वदुपरोधेन । मेघानुसरणेनेति यावत् । क्लिष्टकान्तेः क्षी-णकान्तेरिन्दोर्दैन्यं शोच्यतां बिभर्ति । नूनमिति वितर्के ॥ "नूनं त-र्केऽर्थनिश्चये" इत्यमरः ॥ पूर्ववत्तथापि न भ्रमितव्यमिति भावः ॥२३॥

अन्वयार्थः—अत्यन्त रोनेसे उच्छूसित नेत्रवाली, स्वासोंके अत्यन्त उष्ण होनेके कारण अन्य वर्णकूं प्राप्त हुए अधर ओष्ठवाली, हाथपर रक्खाहुआ लम्बे बाल होनेके कारण आलस्यके प्रगट करनेहारा प्रियाका मुख तेरे आनेसे क्षीणकान्तिवाले चंद्रमाकी दीनताकूं निश्चय धारण करता है ॥ २३ ॥

भावार्थः—मेरा वियोग होनेसे अत्यन्त रुदन करते जिसके नेत्र सूजगए हैं, मनके तापसे उत्पन्नहुए अधिक उष्ण स्वासोंसे रंग बदलगया । अर्थात् जिसके अधरोष्ठ निस्तेज होगए हैं; चिन्ताकेमारे हाथपर टिकायाहुआ, और केशोंके बिखुरनेसे पूर्ण न दिखाई देनेवाला उस प्यारीका मुख;—तुह्मारे आडमें आजानेसे निस्तेज हुए चन्द्रमाके दीनपनकी समान हुआ मुझको जान पडता है ॥ २३ ॥

सर्वविरहिणीसाधारणानि लक्षणानि संभावनयोत्प्रेक्ष्याणीत्याह "आलोके" इत्यादिभिस्त्रिभिः—

**आलोके ते निपतति पुरा सा बलिव्याकुला वा**
**मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ।**
**पृच्छन्ती वा मधुरवचनां सारिकां पञ्जरस्थां**
**कच्चिद्भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति ।२४।**

**अन्वयः**—हे मेघ! सा बलिव्याकुला वा विरहतनुभावगम्यम् मत्सादृश्यम् लिखन्ती मधुरवचनाम् [ अतएव ] पञ्जरस्थाम् शारिकाम् रसिके भर्तुः स्मरसि क्वचित् हि त्वम् तस्य प्रिया इति पृच्छन्ती आलोके पुरा निपतति ॥ २४ ॥

**आलोकेति** ॥ हे मेघ, सा मत्प्रिया । बलिषु नित्येषु प्रोषितागमनार्थेषु च देवताराधनेषु व्याकुला व्यापृता वा । विरहेण तनु कृशं भावग-

म्यम् । तत्कार्श्यस्यादृष्टचरत्वात्संमति संभावनयोत्प्रेक्ष्यमित्यर्थः । मत्सादृश्यं मदाकारसाम्यम् । मत्प्रतिकृतिमित्यर्थः । यद्यपि सादृश्यं नाम प्रसिद्धवस्त्वन्तरगतमाकारसाम्यं तथापि प्रतिकृतित्वेन विवक्षितमितरथालेख्यत्वासंभवात् । अक्षय्यकोशे "आलिख्येऽपि च सादृश्यम्" इत्यभिधानात् ॥ लिखन्ती क्वचित्फलकादौ विन्यस्यन्ती वा चित्रदर्शनस्य विरहिणीविनोदोपायत्वादिति भावः ॥ एतच्च कामशास्त्रसंवादेन सम्यग्विवेचितमस्माभी रघुवंशसंजीविन्याम् "सादृश्यप्रतिकृतिदर्शनैः प्रियायाः" इत्यत्र । मधुरवचनां मञ्जुभाषिणीम् । अतएव पञ्जरस्थाम् । हिंस्रेभ्यः कृतसंरक्षणामित्यर्थः । सारिकां स्त्रीपक्षिविशेषाम् । हे रसिके, भर्तुः स्वामिनः स्मरसि कच्चित् ॥ "कच्चित्कामप्रवेदने" इत्यमरः ॥ भर्तारं स्मरसि किमित्यर्थः ॥ "अधीगर्थदयेशां कर्मणि" इति कर्मणि षष्ठी ॥ स्मरणे कारणमाह—हि यस्मात्कारणात्त्वं तस्य भर्तुः । प्रीणातीति प्रिया ॥ "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः ॥ अतः प्रेमास्पदत्वात्स्मर्तुमर्हसीति भावः । इत्येवं पृच्छन्ती वा ॥ वाशब्दो विकल्पे ॥ "उपमायां विकल्पे वा" इत्यमरः ॥ ते तवालोके दृष्टिपथे पुरा निपतति । सद्यो निपतिष्यतीत्यर्थः ॥ "स्यात्प्रबन्धे पुरातीते निकटागामिके पुरा" इत्यमरः ॥ "यावत्पुरानिपातयोर्लट्" इति लट् ॥ २४ ॥

**अन्वयार्थः**—हे मेघ ! वह देवताओंके पूजनमें कातर वा वियोगसे कृश भावनासे जानने योग्य, मेरी आकृतिको लिखती वा मधुरवचन बोलनेकेही कारण पिंजरेमें स्थित सारिकासे "हे रसिके क्या भर्ताको स्मरण करती है ? क्योंकि तू उसकी प्यारी है" इस प्रकार पूछतीहुई तेरे दृष्टिमार्गके सन्मुख प्राप्त होगी ॥ २४ ॥

**भावार्थः**—हे सखे ! वह मेरी प्यारी मेरा आगमन जल्दीहोनेके कारण देवताकी पूजा करनेमें लगी; अथवा केवल तर्कमात्रसे जानने योग्य, विरहसे कृश मेरे शरीरका, बैठकर चित्र काढतीहुई, अथवा पिंजरेमें बैठी मधुरभाषण करनेवाली मैनासे "अरी रसिके मैनें! तुझें कभी अपने स्वामीकी याद आवे है? क्यों कि तू उनकी अति प्यारी है।" ऐसा पूछती और पिंजरेके धोरे खडीहुई तुझें दिखाई देगी ॥ २४ ॥

उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथंचि-
द्भूयो भूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती २५

अन्वयः—हे सौम्य ! मलिनवसने उत्सङ्गे वीणाम् निक्षिप्य मद्गोत्राङ्कं विरचितपदम् गेयम् उद्गातुकामा ( तथा ) नयनसलिलैः आर्द्राम् तन्त्रीम् कथञ्चित् सारयित्वा भूयोभूयः स्वयमपि कृताम् मूर्च्छनाम् विस्मरन्ती ॥ २५ ॥

उत्सङ्गेति ॥ हे सौम्य साधो, मलिनवसने । "प्रोषिते मलिना कृशा" इति शास्त्रादित्यर्थः ॥ उत्सङ्गे ऊरौ वीणां निक्षिप्य । मम गोत्रं नामाङ्कश्चिह्नं यस्मिंस्तन्मद्गोत्राङ्कं मन्नामाङ्कं यथा तथा ॥ "गोत्रं नाम्नि कुलेऽपि च" इत्यमरः ॥ विरचितानि पदानि यस्य तत्तथोक्तं गेयं गानार्हं प्रबन्धादि ॥ "गीतम्" इति पाठे स एवार्थः ॥ उद्गातुमुच्चैर्गातुं कामो यस्याः सा ॥ "तुं काममनसोरपि" इति मकारलोपः ॥ देवयोनित्वाद्गान्धारग्रामेण गातुकामेत्यर्थः । तदुक्तम्—"षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः । न तु गान्धारनामानं स लभ्यो देवयोनिभिः ॥" इति ॥ तथा नयनसलिलैः प्रियतमस्मृतिजनितैरश्रुभिरार्द्रां तन्त्रीं कथंचित्कृच्छ्रेण सारयित्वा । आर्द्रत्वापहरणाय करेण प्रमृज्यान्यथा क्वणनासंभवादिति भावः । भूयो भूयः पुनः स्वयमात्मना कृतामपि । विस्मरणानर्हामपीत्यर्थः । मूर्च्छनां स्वरारोहावरोहक्रमम् । "स्वराणां स्थापनाः सान्ता मूर्च्छनाः सप्त सप्त हि" इति संगीतरत्नाकरे ॥ विस्मरन्ती वा । "आलोके ते निपतति" इति पूर्वेणान्वयः ॥ विस्मरणं चात्र दयितगुणस्मृतिजनितमूर्च्छावशादेव ॥ तथा च रसरत्नाकरे—"वियोगायोगयोरिष्टगुणानां कीर्तनात्स्मृतेः । साक्षात्कारोऽथवा मूर्च्छा दशधा जायते तथा ॥" इति ॥ मत्सादृश्यमित्यादिना मनःसङ्गानुवृत्तिः सूचिता ॥ २५ ॥

**अन्वयार्थः**—हे सौम्य ! मलिन वस्त्रवाली गोदीमें वीणाको रखकर, मेरे गोत्र और नामके चिन्हवाले रचित पदोंके गीतकू गानेकी

इच्छासे तथा नेत्रोंके जलसे भीजीहुई वीणाको किसीप्रकार पोंछकर वारंवार अपनीही कीहुई मूर्छको भूलती हुई ॥ २५ ॥

**भावार्थः**—हे साधो! अथवा विरहकेमारे मलिन वसन पहरे, गोदीमें वीणा रख, मेरे नामसे चिन्हित गीतको ऊंचे स्वरसे गान्धार रागमें गानेकी इच्छा करनेवाली, मेरी याद आजानेसे नेत्रोंके गिरेहुए आंसुओंकरके भीजेहुए तारको अतिकष्टसे मिलाय अपनी कीहुई मूर्च्छनाको वारम्वार भूलतीहुई हमारी प्रिया तुह्मारी दृष्टि पडेगी ॥२५॥

**शेषान्मासान्विरहदिवसस्थापितस्यावधेर्वा**
**विन्यस्यन्ती भुवि गणनया देहलीदत्तपुष्पैः ।**
**मत्सङ्गं वा हृदयनिहितारम्भमास्वादयन्ती**
**प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥ २६ ॥**

**अन्वयः**—विरहदिवसस्थापितस्य अवधेः शेषान् मासान् देहलीदत्तपुष्पैः गणनया भुवि विन्यस्यन्ती वा हृदयनिहितारम्भम् मत्सङ्गम् आस्वादयन्ती प्रायेण अङ्गनानाम् रमणविरहेषु एते विनोदाः [ भवन्ति ] ॥ २६ ॥

**शेषानिति** ॥ अथवा विरहस्य दिवसस्तस्मात्स्थापितस्य तत आरभ्य निश्चितस्यावधेरन्तस्य शेषान्गतावशिष्टान्मासान्देहलीदत्तपुष्पैः ॥ देहली द्वारस्याधारदारु ॥ "गृहावग्रहणी देहली" इत्यमरः ॥ तत्र दत्तानि राशीकृतत्वेन निहितानि यानि पुष्पाणि तैर्गणनया एको द्वावित्यादिसंख्यानेन भुवि भूतले विन्यस्यन्ती वा । पुष्पविन्यासैर्मासान्गणयन्ती वेत्यर्थः ॥ यद्वा हृदये निहितो मनसि संकल्पित आरम्भ उपक्रमो यस्य तम् । अथवा हृदयनिहिता आरम्भाश्चुम्बनादयो व्यापारा यस्मिंस्तं मत्सङ्गं मत्संभोगरतिमास्वादयन्ती वा । "आलोके ते निपतति" इति पूर्वेण संवन्धः ॥ ननु कथमयं निश्चय इत्याशङ्कामर्थान्तरन्यासेन परिहरति । प्रायेण बाहुल्येनाङ्गनानां रमणविरहेष्वेते पूर्वोक्ता विनोदाः कालयापनोपायाः । एतेन संकल्पावस्थोक्ता । तदुक्तम्—"संकल्पो नाथविषये मनोरथ उदाहृतः" इति ॥ त्रिभिः कुलकम् ॥ २६ ॥

अन्वयार्थः—वियोगके दिनोंसे स्थापन किये मेरे आनेकी अवधिके शेष महीनोंको, देहरीमें रक्खे फूलोंकी गणनासे पृथ्वीमें रखतीहुई। अथवा हृदयसे धारण किये मेरे व्यापार और सम्भोगके आस्वादन करती ( तेरी दृष्टिगोचर होगी ) बहुधा स्त्रियोंके प्रियवियोगमें यह विनोद होते हैं ॥ २६ ॥

भावार्थः—अथवा जिसदिनसे विरह हुआ है, उस अवधिसे आरंभकरके शेष महीनोंके जाननेको देहरीमें स्थापनकिये पुष्पोंको पृथ्वीमें रखकर गिन रही है। या अन्तरमें मेरे सम्भोग-सुख-आरंभकी कल्पनाकरके उस सुखका अनुभव करतीहुई हमारी प्यारीको तुम देखोगे (यदि तुम यह विचारो कि वह सुख कैसा समझती है; तो प्रत्यक्षही है कि ) प्रियपुरुषका वियोग होनेपर विरहिणी स्त्रियों-के मन बहलानेको यही उपाय है ॥ २६ ॥

सव्यापारामहनि न तथा पीडयेन्मद्वियोगः
शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते।
मत्संदेशैः सुखयितुमलं पश्य साध्वीं निशीथे
तामुन्निद्रामवनिशयनां सौधवातायनस्थः ॥ २७ ॥

अन्वयः—( हे सखे, ) मद्वियोगः अहनि सव्यापाराम् ते सखीम् तथा न पीडयेत् ( यथा रात्रौ ) [ किन्तु ] निर्विनोदाम् गुरुतरशुचम् अहम् शङ्के [ अतः ] निशीथे उन्निद्राम् अवनिशयनाम् साध्वीम् ताम् मत्सन्देशैः अलम् सुखयितुम् सौधवातायनस्थः पश्य ॥ २७ ॥

सव्यापारामिति ॥ हे सखे, अहनि दिवसे सव्यापारां पूर्वोक्तबलिचित्रलेखनादिव्यापारवतीं ते सखीं स्वप्रियां मद्वियोगो मद्विरहस्तथा तेन प्रकारेण ॥ " प्रकारवचने थाल् " इति थाल्प्रत्ययः ॥ न पीडयेत्। यथा रात्राविति शेषः ॥ किं तु रात्रौ निर्विनोदां निर्व्यापारां ते सखीं गुरुतरा शुग्यस्यास्तां गुरुतरशुचमतिदुर्भरदुःखां शङ्के तर्क-

यामि ॥ "शङ्का वितर्कभययोः" इति शब्दार्णवे ॥ अतो निशीथेऽर्धरात्र उन्निद्रामुत्सृष्टनिद्राम्। अवनिरेव शयनं शय्या यस्यास्ताम्॥ नियमार्थं स्थण्डिलशायिनीम्। साध्वीं पतिव्रताम्॥ "साध्वी पतिव्रता" इत्यमरः ॥ अतो नान्यथा शङ्कितव्यमिति भावः। तां त्वत्सखीं मत्संदेशैर्मद्वार्ताभिरलं पर्याप्तं सुखयितुमानन्दयितुं सौधवातायनस्थः सन्पश्य ॥ "सखा धात्री च पितरौ मित्रदूतशुकादयः। सुखयन्तीष्टकथनसुखोपायैर्वियोगिनीम् ॥" इति रत्नाकरे॥ दूतश्चायं मेघ इति भावः ॥ अनेन जागरावस्थोक्ता ॥ २७ ॥

**अन्वयार्थः**–हे सखे ! मेरा वियोग दिनमें व्यापारवाली तेरे सखीको तैसा नही पीडा देता ( जैसा कि रात्रिमें ) (किन्तु) रात्रिमें आनन्दरहित अत्यन्त शोचयुक्त होगी यह मैं शंका करता हूं इसकारण रात्रिमें जागती पृथ्वीपर सोईहुई उस सतीको मेरे संदेशोंद्वारा पूर्ण आनन्द करनेको महलके झरोंखोंमें स्थित होकर पूछना ॥ २७ ॥

**भावार्थः**—मेरे विरहमें दिन अनेक कार्योंमें व्याप्त रहनेसे उतना कष्टदाई तुह्मारी सखीको नहीं होता, परन्तु रात्रिमें किसी विनोदनोपायके न रहनेसे वह दुर्भरदुःखाग्निमें भस्म होगी, मुझे ऐसी आशंका होती है। इसलिये तुम रात्रिके समय पृथ्वीपर लेटी निद्रारहित पतिव्रता अपनी सखीको; मंदिरके झरोंखोंमें खडेहोकर दर्शन करना। और मेरा समाचार देकर उसको आनन्दित करना ॥ २७॥

पुनस्तामेव विशिनष्टि "आधिक्षामाम्" इत्यादिभिश्चतुर्भिः—

**आधिक्षामां विरहशयने संनिषण्णैकपार्श्वां**
**प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः।**
**नीता रात्रिः क्षण इव मया सार्धमिच्छारतैर्या**
**तामेवोष्णैर्विरहमहतीमश्रुभिर्यापयन्तीम् ॥ २८ ॥**

**अन्वयः**—आधिक्षामाम् विरहशयने सन्निषण्णैकपार्श्वाम् [ अतएव ] प्राचीमूले कलामात्रशेषाम् हिमांशोः तनुमिव स्थिताम् [ तथा ] या रात्रिः मया सार्धम् इच्छारतैः क्षणइव नीता तामेव विरहमहतीम् उष्णैः अश्रुभिः यापयन्तीम् ( पश्य ) ॥२८॥

**आधिक्षामामिति**॥आधिना मनोव्यथया क्षामां कृशाम्॥"पुंस्याधि-

मनिसी व्यथा" इत्यमरः ॥ क्षायतेः कर्तरि क्तः ॥ "क्षायो मः" इति निपातकास्य मकारः ॥ विरहे शयनं तस्मिन्विरहशयने। पल्लवादिरचित इत्यर्थः । संनिषण्णमेकं पार्श्वं यस्यास्ताम्। अत एव प्राच्याः पूर्वस्या दिशो मूले । उदयगिरिप्रान्त इत्यर्थः ॥ प्राचीग्रहणं क्षीणावस्थाद्योतनार्थम् ॥ मूलग्रहणं दृश्यतार्थम् ॥ कलामात्रं कलैव शेषो यस्यास्तां हिमांशोस्तनुं मूर्तिमिव स्थिताम्। तथा या रात्रिर्मया सार्धमिच्छया कृतानि रतानि तैः ॥ शाकपार्थिवादित्वान्मध्यमपदलोपी समासः ॥ क्षण इव नीता यापिता तां तज्जातीयामेव रात्रिं विरहेण महतीं महत्त्वेन प्रतीयमानामुष्णैरश्रुभिर्यापयन्तीम् ॥ यातेर्ण्यन्ताच्छतृप्रत्ययः। "आर्तिह्री—" इत्यादिना पुगागमः ॥ स एव कालः सुखिनामल्पः प्रतीयते दुःखिनां तु विपरीत इति भावः॥ एतेन कार्श्यावस्थोक्ता ॥२८॥

अन्वयार्थः-मनोव्यथासे कृश, वियोगशयन- ( तृणाच्छादित बिछौना ) में एकही पार्श्वसे बैठी ( इसीकारण ) पूर्वदिशामें कलामात्र अवशेष चंद्रमाकी मूर्तिकी नाई स्थितहुईको जो रात्रि मेरे सङ्ग अनुकूलतासे क्षणमात्रकी समान की, उन्हीं वियोगसे बढी ( रात्रियों ) कूं उष्ण आंसुओंसे बितातीहुई ( इसकूं देखना ) ॥ २८ ॥

भावार्थः—मानसिक व्याधिसे अति दुबली विरहसेजकी एक बगलमें सोतीहुई; इसकारण पूर्वदिशामें स्थित चन्द्रकलाकी समान तुह्मारी सखीने हमारे सहित इच्छापूर्वक रति क्रीडाकरके जो रात्रि एक मुहूर्तके समान बिताई है; अब विरहसे बढीहुई उस रात्रिको अति गरम आंसुओंके जलद्वारा बहुत कष्टसे बितातीहुई तुम उसको देखोगे ॥ २८ ॥

पादानिन्दोरमृतशिशिराञ्जालमार्गप्रविष्टा-
न्पूर्वप्रीत्या गतमभिमुखं संनिवृत्तं तथैव ।
चक्षुः खेदात्सलिलगुरुभिः पक्ष्मभिश्छादयन्तीं
साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम् २९

अन्वयः—जालमार्गप्रविष्टान् अमृतशिशिरान् इन्दोः पादान् पूर्वप्रीत्या अभिमुखम् (यथा तथा) गतम् तथैव संनिवृत्तम् चक्षुः खेदात् सलिलगुरुभिः पक्ष्मभिः छादयन्तीम् [अतएव] साभ्रे अह्नि प्रबुद्धाम् न सुप्ताम् स्थलकमलिनीमिव स्थिताम् ( पश्य ) ॥ २९ ॥

**पादानिति** ॥ जलमार्गप्रविष्टान्गवाक्षविवरगतानमृतशिशिरानिन्दोः पादान्रश्मीन्पूर्वप्रीत्या पूर्वस्नेहेन । पूर्ववदानन्दकरा भविष्यन्तीति बुद्ध्येति भावः । अभिमुखं यथा तथा गतं तथैव संनिवृत्तं यथागतं तथैव प्रतिनिवृत्तम् । तदा तेषामतीव दुःसहत्वादिति भावः । चक्षुर्दृष्टिं खेदात्सलिलगुरुभिरश्रुदुर्भरैः पक्ष्मभिश्छादयन्तीम् । अतएव साभ्रे दुर्दिनेऽह्नि दिवसे न प्रबुद्धां मेघावरणादविकसितां न सुप्तामहरित्यमुकुलिताम् ॥ उभयत्रापि नञर्थस्य नशब्दस्य सुप्सुपेति समासः ॥ स्थलकमलिनीमिव स्थिताम् । एतेन विषयद्वेषाख्या षष्ठी दशा सूचिता ॥

**अन्वयार्थः**—झरोखोंद्वारा प्रवेशित हुई अमृतवत् शीतल चंद्रमाकी किरणोंको पूर्वस्नेहकरके सन्मुख जैसे गई तैसेही निवृत्त हुई दृष्टिकूं खेदसे, जल आनेके कारण भारी हुए पलकोंद्वारा आच्छादन करतीहुई ( इसी कारण ) बादलवाले दिनमें न खिलीहुई स्थलकमलिनीकी समान स्थित हुईको ( देखना ) ॥ २९ ॥

**भावार्थः**—झरोखोंके मार्गसे पडीहुई अमृतकी समान शीतल चन्द्रमाकी किरणोंको पहलेकी समान मनमें सुखदाई समझ सेवन करनेको जाय फिर उनहींको कष्टदाई जान लौट पडेगी; और अति दुःखकेमारे आंसुओंके जलसे भरेहुए पलकोंसे दोनो नेत्र ढककर; दुर्दिनमें जिसप्रकार पृथ्वीपर लगीहुई कमलिनी न खिले और न बंदही होती है, ऐसि हमारी प्यारीको तुम देखोगे ॥ २९ ॥

**निःश्वासेनाधरकिसलयक्लेशिना विक्षिपन्तीं**
**शुद्धस्नानात्परुषमलकं नूनमागण्डलम्बम् ।**
**मत्संभोगः कथमुपनयेत्स्वप्नजोऽपीति निद्रा-**
**माकाङ्क्षन्तीं नयनसलिलोत्पीडरुद्धावकाशाम् ॥३०॥**

**अन्वयः**—शुद्धस्नानात् परुषम् नूनम् आगण्डलम्बम् अलकम् अधरकिसलयक्लेशिना निश्वासेन विक्षिपन्तीम् [ तथा ] स्वप्नजः अपि मत्सम्भोगः कथम् उपनयेत् इति नयनसलिलोत्पीडरुद्धावकाशाम् निद्राम् आकाङ्क्षन्तीम् [ पश्य ] ॥ ३० ॥

**निःश्वासेति** ॥ शुद्धस्नानात्तैलादिरहितस्नानात्परुषं कठिनस्पर्शं नूनमागण्डलम्बम् ॥ सुप्सुपेति समासः ॥ अलकं चूर्णकुन्तलान् ॥ जा-

त्वेकवचनम् ॥ अधरकिसलयं क्लेशयति क्लिश्नातीति वा तेन तथो-क्तेन । उष्णेनेत्यर्थः ॥ क्लिश्यतेर्ण्यन्तात्क्लिश्नातेरण्यन्ताद्वा ताच्छील्ये णिनिः ॥ निःश्वासेन विक्षिपन्तीं चालयन्तीं तथा स्वप्नजोऽपि स्वप्ना-वस्थाजन्योऽपि । साक्षात्संभोगासंभवादिति भावः । मत्संभोगः कथं केनापि प्रकारेणोपनयेत् । आगच्छेदित्याशयेनेति शेषः ॥ इति नैवोक्तार्थत्वादप्रयोगः । "प्रयोगे चापौनरुक्त्यम्" इत्यालंकारिकाः ॥ प्रार्थनायां लिङ् ॥ नयनसलिलोत्पीडेनाश्रुप्रवृत्त्या रुद्धावकाशामाक्रान्त-स्थानाम् । दुर्लभामित्यर्थः । निद्रामाकाङ्क्षन्तीम् । स्नेहातुरत्वादिति भावः॥ अत्राश्रुविसर्जनेन लज्जात्यागो व्यज्यते ॥ ३० ॥

अन्वयार्थः–तैलादिरहित स्नानसे कठिन स्पर्शवाले, ठीक कपोल पर्यन्त लम्बायमान बालोंकू, अधररूपी पल्लवके क्लेश देनेवाले, निश्वा-सोंसे चलायमान करतीहुई तथा स्वप्नसे उत्पन्न हुईभी मेरे सम्भोग-की किसी प्रकारसे प्राप्त होनेकी इच्छासे नेत्रोंके जलप्रवाहसे दुर्लभ निद्राकी इच्छा करतीहुईको देखना ॥ ३० ॥

भावार्थः—अधरपल्लवको क्लेश देनेवाले अति उष्ण स्वासोंसे गा-लोंपर लटकते हुए तेलके न लगानेसे कडे पडे हुए बिखरे केशकला-पोंको सह्मालतेहुए स्वप्नमें मेरे समागमको प्राप्त करनेकी आशासे, अनवरत आंसुओंके गिरानेसे अति दुर्लभ निद्राकी कामना करतीहुई हमारी प्रियाको तुम देखोगे ॥ ३० ॥

**आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा**
**शापस्यान्ते विगलितशुचा तां मयोद्वेष्टनीयाम् ।**
**स्पर्शक्लिष्टामयमितनखेनासकृत्सारयन्तीं**
**गण्डाभोगात्कठिनविषमामेकवेणीं करेण ॥ ३१ ॥**

**अन्वयः**—आद्ये विरहदिवसे दाम हित्वा या शिखा बद्धा शापस्य अन्ते विगलितशुचा मया उद्वेष्टनीयाम् स्पर्शक्लिष्टाम् कठिनविषमाम् ताम् एकवेणीम् अयमितनखेन करेण गण्डाभोगात् असकृत् सारयन्तीम् [ पश्य ] ॥ ३१ ॥

**आद्य इति** ॥ आद्ये विरहदिवसे दाम मालां हित्वा त्यक्त्वा या शिखा बद्धा ग्रथिता शापस्यान्ते विगलितशुचा वीतशोकेन मयोद्वे-

ष्टनीयां मोचनीयां स्पर्शक्लिष्टाम् । स्पर्शे सति मूलकेशेषु सव्यथामित्यर्थः। कठिना च सा विषमा निम्नोन्नता च ताम् ॥ खञ्जकुब्जादिवदन्यतरस्य प्राधान्यविवक्षया "विशेषणं विशेष्येण बहुलम्" इति समासः ॥ एकवेणीमेकीभूतवेणीम् ॥ "पूर्वकाल-" इत्यादिना तत्पुरुषः ॥ तां शिखाम्। अयमिता अकर्तितोपान्ता नखा यस्य तेन करेण गण्डाभोगात्कपोलविस्तारादसकृन्मुहुर्मुहुः सारयन्तीमपसारयन्तीम्। "तां पश्य" इति पूर्वेण संबन्धः । असकृत्सारणाच्चित्तविभ्रमदशा सूचिता ॥ ३१ ॥

**अन्वयार्थः**-पहले वियोगके दिनमें मालाको छोडकर जो शिखा बांधीथी शापके अन्तमें शोकरहित मुझकरके खोलने योग्य स्पर्शसेही क्लेशदायक, कठिन औ उंची नीची उसकी एक वेणीके विना कतरे नखवाले हाथसे कपोलोंपर पडनेसे वारंवार निवारण करतीहुईको देखना ॥ ३१ ॥

**भावार्थः**—मैंने प्रथम विरहके दिन जो चोटी मालारहित करके बांध दी है, शापके वीत जानेपर शोकरहित हो फिर उस वेणीको खोलूंगा। हमारी प्रियाको लोहेकी समान नखोंसे कठिन और स्पर्श करनेसे कष्टकी देनेवाली उस वेणीको गालोंपरसे वारंवर सरकातेहुए तुम देखोगे ॥ ३१ ॥

**सा संन्यस्ताभरणमबला पेशलं धारयन्ती**
**शय्योत्सङ्गे निहितमसकृद्दुःखदुःखेन गात्रम्।**
**त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं**
**प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ ३२ ॥**

**अन्वयः**—अबला संन्यस्ताभरणम् असकृत् दुःखदुःखेन शय्योत्सङ्गे निहितम् पेशलम् गात्रम् धारयन्ती सा त्वाम् अपि नवजलमयम् अस्रम् अवश्यम् मोचयिष्यति [ तथाहि ] प्रायः आर्द्रान्तरात्मा सर्वः करुणावृत्तिः भवति ॥ ३२ ॥

**सेति** ॥ अबला दुर्बला संन्यस्ताभरणं कृशत्वात्परित्यक्ताभरणमसकृदनेकशो दुःखदुःखेन दुःखप्रकारेण ॥ "प्रकारे गुणवचनस्य" इति द्विर्भावः ॥ शय्योत्सङ्गे निहितं पेशलं मृदुलं गात्रं शरीरं धारय-

न्ती वहन्ती ॥ अनेनात्यन्ताशक्त्या मूर्च्छावस्था सूच्यते ॥ सा त्वत्सखी त्वामपि नवजलमयं नवाम्बुरूपमस्रं बाष्पमवश्यं सर्वथा मोचयिष्यति ॥ "द्विकर्मसु पचादीनामुपसंख्यानम्" इति मुचेः पचादित्वाद्द्विकर्मकत्वम् ॥ तथाहि । प्रायः प्रायेणार्द्रान्तरात्मा मृदुत्त्हृदयः । मेघस्तु द्रवान्तःशरीरः । सर्वः करुणा करुणामयी वृत्तिरन्तःकरणवृत्तिर्यस्य स करुणावृत्तिर्भवति ॥ हि यस्मात् । अस्मिन्नवसरे सर्वथा त्वया शीघ्रं गन्तव्यमनन्तरदशापरिहारायेति संदर्भाभिप्रायः ॥ ननु किमिदमादिमां चक्षुःप्रीतिमुपेक्ष्यावस्थान्तराण्येव तत्रभवान्कविरादृतवान् । उच्यते— "संभोगो विप्रलम्भश्च द्विधा शृङ्गार उच्यते । संयुक्तयोस्तु संभोगो विप्रलम्भो वियुक्तयोः ॥ पूर्वानुरागमानाख्यप्रवासकरुणात्मना । विप्रलम्भश्चतुर्धात्र प्रवासस्तत्र च त्रिधा ॥ कार्यतः संभ्रमाच्छापादस्मिन्काव्ये तु शापजः । प्रागसंगतयोर्यूनोः सति पूर्वानुरञ्जने ॥ चक्षुःप्रीत्यादयोऽवस्था दश स्युस्तत्क्रमो यथा । दृङ्मनःसङ्गसंकल्पा जागरः कृशता रतिः ॥ ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश । पूर्वसंगतयोरेव प्रवास इति कारणात् ॥ न तत्रापूर्ववच्चक्षुःप्रीतिरुत्पत्तिमर्हति । सत्सङ्गस्य तु सिद्धस्याप्यविच्छेदोऽत्र वर्ण्यते ॥ अन्यथा पूर्ववद्वाच्या इति तावद्व्यवस्थितेः । वैयर्थ्यादादिमां हित्वा वैरस्यादन्तिमां तथा ॥ त्वत्सङ्गादिरिहाचष्ट कविरष्टाविति स्थितिः । मत्सादृश्यं लिखन्तीति पद्येऽस्मिन्प्रतिपादिता ॥ चक्षुःप्रीतिरिति प्रोक्तं निरुत्तरकृताननम् । चक्षुःप्रीतिर्भवेच्चित्रेष्वदृष्टचरदर्शनात् ॥ यथा मालविकारूपमग्निमित्रस्य पश्यतः । प्रोषितानां च भर्तॄणां क्व दृष्टादृष्टपूर्वता ॥ अथ तत्रापि संदेहे स्वकलत्राणि पृच्छतु । किं भर्तृप्रत्यभिज्ञा स्यात्किं वैदेशिकभावना ॥ प्रवासादागते स्वस्मिन्नित्यलं कलहैर्वृथा ॥" इति ॥ ३२ ॥

**अन्वयार्थः**—दुर्बल, गहने त्यागे वारंवार दुःखके दुःखसे शय्याकी बीचमें रक्खे कोमल शरीरको धारण करती वह तुझकूंभी नवीन जलवाले आंसूंकूं अवश्य मोचन करावेगी । (क्योंकि) बहुधा मृदुत्त्हृदयवाले सबही करुणायुक्त अन्तःकरणवाले होते हैं ॥ ३२ ॥

**भावार्थः**—अति दुःखित होजानेसे वह अबला बाला भूषण निकाल अपने अत्यन्त कोमल शरीरको अति कष्टसे सेजपर पौढाय तुमसेभी निश्चय जलकणरूप आंसुओंकी बूंदें त्याग करावेगी, क्योंकी

जिनका अन्तःकरण गीला होता है वह स्वभावसेही करुणास्वभाव होते हैं ॥ ३२ ॥

नन्वीदृशीं दशामापन्नेति कथं त्वया निश्चितमत आह—

**जाने सख्यास्तव मयि मनः संभृतस्नेहमस्मा-**
**दित्थंभूतां प्रथमविरहे तामहं तर्कयामि ।**
**वाचालं मां न खलु सुभगंमन्यभावः करोति**
**प्रत्यक्षं ते निखिलमचिराद्भ्रातरुक्तं मया यत् ॥३३॥**

**अन्वयः**—हे मेघ, तव सख्याः मनः मयि सम्भृतस्नेहम् जाने अस्मात् प्रथमविरहे ताम् इत्थम्भूताम् अहम् तर्कयामि सुभगम्मन्यभावः माम् वाचालम् न करोति खलु [ किन्तु ] हे भ्रातः मया यत् उक्तम् [ तत् ] निखिलम् अचिरात् ते प्रत्यक्षम् भविष्यति ॥ ३३ ॥

**जान इति** ॥ हे मेघ, तव सख्या मनो मयि संभृतस्नेहं संचितानुरागं जाने । अस्मात्स्नेहज्ञानकारणात्प्रथमविरहे । प्रथमग्रहणं दुःखातिशयद्योतनार्थम् । तां त्वत्सखीमित्थंभूतां पूर्वोक्तावस्थामापन्नां तर्कयामि ॥ ननु सुभगमानिनामेष स्वभावो यदात्मनि स्त्रीणामनुरागप्रकटनं तत्राह—वाचालमिति ॥ सुभगमात्मानं मन्यत इति सुभगंमन्यः ॥ "आत्ममाने खश्च" इति खश्प्रत्ययः । "अरुर्द्विषद्—" इत्यादिना मुमागमः ॥ तस्य भावः सुभगंमन्यभावः । सुभगमानित्वं मां वाचालं बहुभाषिणं न करोति खलु । सौन्दर्याभिमानितां न प्रकटयामीत्यर्थः ॥ "स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्" इत्यमरः ॥ "आलजाटचौ बहुभाषिणि" इत्यालच्प्रत्ययः ॥ किंतु हे भ्रातः, मयोक्तं यत् "आधिक्षामाम्" इत्यादि तन्निखिलं सर्वमचिराच्छीघ्रमेव ते तव प्रत्यक्षम् । भविष्यतीति शेषः ॥ ३३ ॥

**अन्वयार्थः**—हे मेघ! तेरी सखीका मन मुझमें पूर्ण स्नेहयुक्त है मैं जानताहूं इसकारण प्रथम वियोग होनेमें उसकूं इसप्रकार दशाग्रस्त मैं तर्कना करताहूं अपनेको सुभग माननेवालेका भाव मुझकूं वाचाल नहीं करता है ( किन्तु ) हे भ्रातः मैंने जो कहा है ( सो ) सम्पूर्ण शीघ्रही तेरे प्रत्यक्ष होगा ॥ ३३ ॥

भावार्थः—तुम्हारी सखीका मन मेरेमें पूर्ण स्नेहसे युक्त है, इसको मैं जानताहूं; उस कारण इस विरहके प्रथम प्रसङ्गसे उसकी पहले ( २५ श्लोकमें ) कही हुई प्रकारकी अवस्था हो रही है। ऐसा होनेसे अपनेको बडा सुन्दर या भाग्यशाली जाननेके अभिमानसे मैं वाचालकीनांई बडबड करताहूं, ऐसा न समझना। हे बन्धु! मेरा कहा सब ठीक है; ऐसा शीघ्रही प्रत्यय तुमको अनुभव होगा ॥ ३३ ॥

रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ।
त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्याः
मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति ॥ ३४ ॥

अन्वयः—अलकैः रुद्धापाङ्गप्रसरम् अञ्जनस्नेहशून्यम् अपिच मधुनः प्रत्यादेशात् विस्मृतभ्रूविलासम् त्वयि आसन्ने उपरिस्पन्दि मृगाक्ष्याः नयनम् मीनक्षोभात् चलकुवलयश्रीतुलाम् एष्यति इति शङ्के ॥ ३४ ॥

रुद्धेति ॥ अलकैः रुद्धा अपाङ्गयोः प्रसरा यस्य तत्तथोक्तम्। अञ्जनेन स्नेहः स्नैग्ध्यं तेन शून्यम् । स्निग्धाञ्जनरहितमित्यर्थः । अपि च किं च मधुनो मद्यस्य प्रत्यादेशान्निराकरणात्। परित्यागादित्यर्थः॥ "प्रत्यादेशो निराकृतिः" इत्यमरः ॥ विस्मृतो भ्रूविलासो भ्रूभङ्गो येन तत् । नयनस्य रुद्धापाङ्गप्रसरत्वादिकं विरहसमुत्पन्नमिति भावः। त्वय्यासन्ने सति । स्वकुशलवार्ताशंसिनीति शेषः । उपर्यूर्ध्वभागे स्पन्दते स्फुरतीत्युपरिस्पन्दि। तथा च निमित्तनिदाने—"स्पन्दान्मूर्ध्नि च्छत्रलाभं ललाटे पट्टमंशुकम् । इष्टप्राप्ति दृशोरूर्ध्वमपाङ्गे हानिमादिशेत् ॥" इति ॥ मृगाक्ष्यास्त्वत्सख्या नयनम् । वाममिति शेषः । "वामभागस्तु नारीणां पुंसां श्रेष्ठस्तु दक्षिणः। दाने देवादिपूजायां स्पन्देऽलंकरणेऽपि च ॥" इति स्त्रीणां वामभागप्राशस्त्यात् ॥ मीनक्षोभान्मीनचलनाच्चलस्य कुवलयस्य श्रियाः शोभायास्तुलां सादृश्यमेष्यतीति शङ्के तर्कयामि ॥ तुल्यार्थैरतुल्योपमाभ्यां तृतीया। कुद्योगे तृतीया ॥ ३४ ॥

अन्वयार्थः—अलकोंके बिखरनेसे नेत्रोंके अपांग—भागप्रसर विव-

जित मद्यके निराकरणसे भूले हुए भृकुटीके विलासवाले, तेरे निकट होनेपर ऊर्ध्वभागसे फडकनेवाले, मृगाक्षीके नेत्र मछलियोंके क्षोभसे चलायमान कमलशोभावाली समानताकूं प्राप्त होगे यह मैं तर्कना करताहूं ॥ ३४ ॥

**भावार्थः**—बिखरेहुए केशकलापके फैल जानेसे नेत्रोंके अपाङ्ग–प्रसर विवर्जितका जलरस शून्य मदके त्यागनेसे कटाक्षहीन उस मृगलोचनीका बायां नेत्र; तुह्मारे निकट ऊपरसे फडककर मछलियोंके जलमें चलनेसे कम्पायमान हुए कमलफूलोंकी समान मनोहर शोभा धारण करेगा ॥ ३४ ॥

**वामश्चास्याः करुरुहपदैर्मुच्यमानो मदीयै-**
**र्मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या।**
**संभोगान्ते मम समुचितो हस्तसंवाहनानां**
**यास्यत्यूरुः सरसकदलीस्तम्भगौरश्चलत्वम् ॥ ३५ ॥**

**अन्वयः—मदीयैः कररुहपदैः मुच्यमानः चिरपरिचितम् मुक्ताजालम् दैवगत्या त्याजितः संभोगान्ते मम हस्तसंवाहनानाम् समुचितः सरसकदलीस्तम्भगौरः अस्याः वाम ऊरुः चलत्वम् यास्यति ॥ ३५ ॥**

**वाम इति** ॥ मदीयैः कररुहपदैर्नखपदैः ॥ "पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्" इत्यमरः ॥ मुच्यमानः परिहीयमाणः । नखाङ्करहित इत्यर्थः । ऊर्वोर्नखपदास्पदत्वं तु रतिरहस्ये—"कण्ठकुक्षिकुचपार्श्वभुजोरःश्रोणिसक्थिषु नखास्पदमाहुः" इति ॥ चिरपरिचितं चिराभ्यस्तं मुक्ताजालं मौक्तिकसरमयं कटिभूषणं दैवगत्या दैववशेन त्याजितः । संप्रति नखपदोष्माभावेन शीतोपचारस्य तस्य वैयर्थ्यादिति भावः ॥ त्यजतेर्ण्यन्तात्कर्मकर्तरि क्तः । "द्विकर्मसु पचादीनां चोपसंख्यानमिष्यते" इति पचादित्वाद्विकर्मकत्वम् ॥ संभोगान्ते मम हस्तसंवाहनानां हस्तेन मर्दनानाम् ॥ "संवाहनं मर्दनं स्यात्" इत्यमरः ॥ समुचितो योग्यः ॥ सरसो रसार्द्रः परिपक्वो न शुष्कश्च स एव विवक्षितः । तत्रैव पाण्डिमसंभवात् । स चासौ कदलीस्तम्भश्च स एव गौरः पाण्डुरः ॥ "गौर करीरे सिद्धार्थे शुक्ले

परिस्फुरितोऽपि च" इति मालतीमालायाम् ॥ अस्याः प्रियाया वाम ऊरुरात्मनं स्पन्दनं यास्यति प्राप्स्यते ॥ "ऊरोः स्पन्दाद्रतिं विद्याद्वाहोः प्राप्तिं सुवाससः" इति निमित्तनिदाने ॥ ॥ ३५ ॥

अन्वयार्थः—मेरेही नखचिन्होंसे त्यागा हुआ बहुतकालका परिचित मुक्तामय ( कटिभूषण ) भाग्यसे त्यागा हुआ, संभोगके अन्तमें मेरे हस्तमर्दनके योग्य रसीले केलेके स्तंभकी समान गौर बांया ऊरु निश्चयही फडके ॥ ३५ ॥

भावार्थः—मेरे नखाघातसे रहित, और बहुत कालपर्यन्त धारण कियेहुए मुक्तामय कटिभूषणको जिसने दैवगतिसे इस समय त्याग दिया है, वैसेही सम्भोगभोग, जो कि मेरे हाथसे मर्दन होनेके योग्य है और जो सरस केलेके थंभकी समान गौरवर्ण है, ऐसी उसकी बांई जांघ तुह्मारे गमन करनेसे निश्चय फडकेगी ॥ ३५ ॥

तस्मिन्काले जलद यदि सा लब्धनिद्रासुखा स्या-
दन्वास्यैनां स्तनितविमुखो याममात्रं सहस्व ।
मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथंचि-
त्सद्यःकण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥ ३६ ॥

अन्वयः—हे जलद ! यदि तस्मिन् काले सा लब्धनिद्रासुखा स्यात् [ चेत् ] तर्हि एनाम् अन्वास्य स्तनितविमुखः ( त्वं ) याममात्रम् सहस्व अस्याः प्रणयिनि मयि कथञ्चित् स्वप्नलब्धे गाढोपगूढम् सद्यः कण्ठच्युतभुजलताग्रन्थिः मा भूत् ॥ ३६ ॥

तस्मिन्निति ॥ हे जलद, तस्मिन्काले त्वदुपसर्पणकाले सा मत्प्रिया लब्धं निद्रासुखं यया तादृशी स्याद्यदि स्याच्चेत् । एनां निद्राणामन्वास्य । पश्चादासित्वेत्यर्थः ॥ उपसर्गवशात्सकर्मकत्वम् ॥ स्तनितविमुखो गर्जितपराङ्मुखो निःशब्दः सन् । अन्यथा निद्राभङ्गः स्यादिति भावः । याममात्रं प्रहरमात्रम् "द्वौ यामप्रहरौ समौ" इत्यमरः ॥ सहस्व प्रतीक्षस्व ॥ प्रार्थनायां लोट् ॥ शक्तयोरेकवारसुरतस्य यामावधिकत्वात्स्वप्नेऽपि तथा भवितव्यमित्यभिप्रायः । तथा च रतिसर्वस्वे—"एकवारावधिर्यामो रतस्य परमो मतः ।चण्डशक्तिमतो-

यूनोरङ्गुतक्रमवर्तिनोः॥" इति॥ यामसहनस्य प्रयोजनमाह—मा भूदिति॥ अस्याः प्रियायाः प्रणयिनि प्रेयसि मयि कथंचित्कृच्छ्रेण स्वप्नलब्धे सति। गाढोपगूढं गाढालिङ्गनम्॥ नपुंसके भावे क्तः॥ सद्यस्तत्क्षणं कण्ठाच्च्युतः स्रस्तो भुजलतयोर्ग्रन्थिबन्धो यस्य तन्मा भून्मास्तु। कथंचिल्लब्धस्यालिङ्गनस्य सद्यो विघातो मा भूदित्यर्थः। न चात्र निद्रोक्तिः "तामुन्निद्राम्" इति पूर्वोक्तेन निद्राच्छेदेन विरुध्यते पुनः सप्तम्याद्यवस्थासु पाक्षिकनिद्रासंभवात्॥ तथा च रसरत्नाकरे—"आसक्ती रोदनं निद्रा निर्लज्जानर्थवाग्भ्रमः। सप्तमादिषु जायन्ते दशाभेदेषु वासुके॥" इति॥ ३६॥

**अन्वयार्थः**-हे मेघ! यदि तेरे जानेके समय वह कुछ सोतीसी हो तो इसके पीछे खडे होकर तू गर्जनासे विमुख हो एक प्रहरतक प्रतीक्षा करना। इस प्रियाकूं मुझ प्रियके किसी प्रकार स्वप्नमें प्राप्त होनेपर तिसकरके अपनी लतारूपी भुजासे मेरे गलेका कियाहुआ आलिंगन निद्रा भंग होनेसे कहीं छूट न जाय॥ ३६॥

**भावार्थः**—हे जलद! तुह्मारे पंहुचनेके समय जो वह नींदके सुखका अनुभव करती हो, तो उसके पीछेकी ओर चुपचाप खडे रहकर एक पहरतक वाट देखना। इस प्रियाकूं मुझप्रियके किसी प्रकार बडे यत्नसे स्वप्नमें प्राप्त होनेपर, तिसकरके अपनी लतारूपी भुजासे उसके (मेरे) गलेका कियाहुआ आलिङ्गन निद्राभङ्ग होनेसे कहीं छूट न जाय॥ ३६॥

तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम्।
विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे
वक्तुं धीरः स्तनितवचनैर्मानिनीं प्रक्रमेथाः॥ ३७॥

**अन्वयः**—ताम् स्वजलकणिकाशीतलेन अनिलेन उत्थाप्य अभिनवैः मालतीनाम् जालकैः समम् प्रत्याश्वस्ताम् त्वत्सनाथे गवाक्षे स्तिमितनयनाम् मानिनीम् विद्युद्गर्भः धीरः स्तनितवचनैः वक्तुम् प्रक्रमेथाः॥ ३७॥

**तामिति**॥ तां प्रियां स्वस्य जलकणिकाभिर्जलबिन्दुभिः शीतलेनानिलेनोत्थाप्य प्रबोध्य। एतेन तस्याः प्रभुत्वाद्व्यजनानिलसमाधि-

र्व्यज्यते । यथाह भोजराजः—"मृदुभिर्मर्दनैः पादे शीतलैर्व्यजनैः स्तनौ । श्रुतौ च मधुरैर्गीतैर्निद्रातो बोधयेत्प्रभुम्" इति ॥ अभिनवैर्नूतनैर्मालतीनां जालकैः समं जातीमुकुलैः सह ॥ "सुमना मालती जातिः" इति । "साकं सत्रा समं सह" इति । "क्षारको जालकं क्लीबे कलिका कोरकः पुमान्" इति चामरः ॥ प्रत्याश्वस्तां सुस्थिताम् । अन्यच्च पुनरुच्छ्वसिताम् ॥ श्वसेः कर्तरि क्तः । "उगितश्च" इति चकारादिट्प्रतिषेधः ॥ एतेनास्याः कुसुमसौकुमार्यं गम्यते ॥ त्वत्सनाथे त्वत्सहिते ॥ "सनाथं प्रभुमित्याहुः सहिते चित्ततापिनि" इति शब्दार्णवे ॥ गवाक्षे स्तिमितनयनां कोऽसाविति विस्मयान्निश्चलनेत्रां मानिनीं मनस्विनीम् । जनानौचित्यासहिष्णुमित्यर्थः । विद्युद्गर्भोऽन्तःस्थो यस्य स विद्युद्गर्भः । अन्तर्लीनविद्युत्क इत्यर्थः ॥ "गर्भोऽपवरकेऽन्तस्थे गर्भोऽग्नौ कुक्षिणोऽर्भके" इति शब्दार्णवे ॥ दृष्टिप्रतिघातेन वक्तुर्मुखावलोकनप्रतिबन्धकत्वान्न विद्युता द्योतितव्यमिति भावः। धीरो धैर्यविशिष्टश्च सन् । अन्यथा शीलत्वादिनैतदनाश्वासनप्रसङ्गादिति भावः । स्तनितवचनैः स्तनितान्येव वचनानि तैर्वक्तुं प्रक्रमेथा उपक्रमस्व ॥ विध्यर्थे लिङ् ॥ "प्रोपाभ्यां समर्थाभ्याम्" इत्यात्मनेपदम् ॥ ३७ ॥

**अन्वयार्थः**—उस प्रियाकूं अपने जलकणोंके शीतल पवनसे उठाकर नवीन मालतीकी कलियोंके साथ, स्वस्थिर तथा तुझसे सनाथ झरोखेंमें विस्मयसे निश्चल नेत्र किये उस मानिनीकूं, बिजली अन्तर्हित कर धीर गर्जनाके वचनोंसे कहनेको प्रारम्भ करना ॥३७॥

**भावार्थः**—अपने जल-कणोंकी समान शीतल बयारसे उठायकर मालतीकी नांई कलीके समान अपनी सखीको जगाय, ऐसे झरोखोंमें; कि जिनमें तुम टिके हो, तटस्थ नेत्रोंसे अवलोकन करनेवाली उस विचारशील स्त्रीसे विद्युल्लताको अन्तर्हित कर बडे धीर्यसे गर्जनारूप शब्दकी बोलचाल आरंभ करना ॥ ३७ ॥

संप्रति दूतस्य श्रोतृजनाभिमुखीकरणचातुरीमुपदिशति—

**भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं**
**तत्संदेशैर्हृदयनिहितैरागतं त्वत्समीपम् ।**
**यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां**
**मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥ ३८ ॥**

**अन्वयः**—हे अविधवे! माम् भर्तुः प्रियम् मित्रम् हृदयनिहितैः तत्सन्देशैः त्वत्समीपम् आगतम् अम्बुवाहम् विद्धि। यः अबलावेणिमोक्षोत्सुकानि पथि श्राम्यताम् प्रोषितानाम् वृन्दानि मन्द्रस्निग्धैः ध्वनिभिः त्वरयति ॥ ३८ ॥

**भर्तुरिति** ॥ विधवा गतभर्तृका न भवतीत्यविधवा सभर्तृका। हे अविधवे । अनेन भर्तृजीवनसूचनादनिष्टाशङ्कां वारयति। मां भर्तुस्तव पत्युः प्रियं मित्रं प्रियसुहृदम्। तत्रापि हृदयनिहितैर्मनसि स्थापितैस्तत्संदेशैस्तस्य भर्तुः संदेशैस्तत्समीपमागतम्। भर्तुः संदेशकथनार्थमागतमित्यर्थः। अम्बुवाहं मेघं विद्धि जानीहि ॥ न केवलमहं वार्ताहरः किंतु घटकोऽपीत्याशयेनाह । योऽम्बुवाहो मेघो मन्द्रस्निग्धैः स्निग्धगम्भीरैर्ध्वनिभिर्गर्जितैः करणैः अबलानां स्त्रीणां वेणयस्तासां मोक्षे मोचन उत्सुकानि पथि श्राम्यतां श्रान्तिमापन्नानां प्रोषितानां प्रवासिनाम्। पान्थानामित्यर्थः। वृन्दानि सङ्घांस्त्वरयति । पान्थोपकारिणो मे किमु वक्तव्यं सुहृदुपकारित्वमिति भावः ॥ ३८ ॥

**अन्वयार्थः**-हे सौभाग्यवति! मुझे अपने स्वामीके प्रियसखा हृदयमें धारण किये उसके संदेशोंकरके अपने समीप आयाहुआ मेघ जान, जो अपनी स्त्रियोंकी वेणी खोलनेमें उत्सुक मार्गमें थकेहुए पथिक-समूहोंको मनोहर गम्भीर गर्जनाओंकरके शीघ्रता कराता है ॥ ३८ ॥

**भावार्थः**—हे सधवे! हमको तुम अपने स्वामीका प्रियतम मित्र जानो; हम मेघ तुह्मारे पतिका सन्देशवचन हृदयमें धारण कर तुह्मारे निकट आये हैं, परदेशको गमहुम जो पुरुष गया विदेशमें निश्चिन्त होकर ठिकेरहते है, हम अपने गम्भीर और कर्ण-प्रिय शब्दसे उनको अपनी प्यारीकी वेणीका संहार करनेके लिये शीघ्रता कराते हैं ॥ ३८ ॥

भर्तृसख्यादिज्ञापनस्य फलमाह—

**इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा**
**त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य संभाव्य चैव।**
**श्रोष्यत्यस्मात्परमवहिता सौम्य सीमन्तिनीनां**
**कान्तोदन्तः सुहृदुपनतः संगमात्किंचिदूनः ॥ ३९ ॥**

र्व्यज्येत । यथाह भोजराजः—"मृदुभिर्मर्दनैः पादे शीतलैर्व्यजनैः स्तनौ । श्रुतौ च मधुरैर्गीतैर्निद्रातो बोधयेत्प्रभुम्" इति ॥ अभिनवैर्नूतनैर्मालतीनां जालकैः समं जातीमुकुलैः सह ॥ "सुमना मालती जातिः" इति । "साकं सत्रा समं सह" इति । "क्षारको जालकं क्लीबे कलिका कोरकः पुमान्" इति चामरः ॥ प्रत्याश्वस्तां सुस्थिताम् । अन्यच्च पुनरुच्छ्वसिताम् ॥ श्वसेः कर्तरि क्तः । "उगितश्च" इति चकारादिट्प्रतिषेधः ॥ एतेनास्याः कुसुमसौकुमार्यं गम्यते ॥ त्वत्सनाथे त्वत्सहिते ॥ "सनाथं प्रभुमित्याहुः सहिते चित्ततापिनि" इति शब्दार्णवे ॥ गवाक्षे स्तिमितनयनां कोऽसाविति विस्मयान्निश्चलनेत्रां मानिनीं मनस्विनीम् । जनानौचित्यासहिष्णुमित्यर्थः । विद्युद्गर्भोऽन्तःस्थो यस्य स विद्युद्गर्भः । अन्तर्लीनविद्युत्क इत्यर्थः ॥ "गर्भोऽपवरकेऽन्तस्थे गर्भोऽग्नौ कुक्षिणोऽर्भके" इति शब्दार्णवे ॥ दृष्टिप्रतिघातेन वक्तुर्मुखावलोकनप्रतिबन्धकत्वान्न विद्युता द्योतितव्यमिति भावः। धीरो धैर्यविशिष्टश्च सन् । अन्यथा शीलत्वादिनैतदनाश्वासनप्रसङ्गादिति भावः । स्तनितवचनैः स्तनितान्येव वचनानि तैर्वक्तुं प्रक्रमेथा उपक्रमस्व ॥ विध्यर्थे लिङ् ॥ "प्रोपाभ्यां समर्थाभ्याम्" इत्यात्मनेपदम् ॥ ३७ ॥

**अन्वयार्थः**—उस प्रियाकूं अपने जलकणोंके शीतल पवनसे उठाकर नवीन मालतीकी कलियोंके साथ, स्वस्थिर तथा तुझसे सनाथ झरोखेंमें विस्मयसे निश्चल नेत्र किये उस मानिनीकूं, बिजली अन्तर्हित कर धीर गर्जनाके वचनोंसे कहनेको प्रारम्भ करना ॥३७॥

**भावार्थः**—अपने जल-कणोंकी समान शीतल बयारसे उठायकर मालतीकी नांई कलीके समान अपनी सखीको जगाय, ऐसे झरोखोंमें; कि जिनमें तुम टिके हो, तटस्थ नेत्रोंसे अवलोकन करनेवाली उस विचारशील स्त्रीसे विद्युल्लताको अन्तर्हित कर बडे धीर्यसे गर्जनारूप शब्दकी बोलचाल आरंभ करना ॥ ३७ ॥

संप्रति दूतस्य श्रोतृजनाभिमुखीकरणचातुरीमुपदिशति—

**भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं**
**तत्संदेशैर्हृदयनिहितैरागतं त्वत्समीपम् ।**
**यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां**
**मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥ ३८॥**

**अन्वयः**—हे अविधवे ! माम् भर्तुः प्रियम् मित्रम् हृदयनिहितैः तत्सन्देशैः त्वत्समीपम् आगतम् अम्बुवाहम् विद्धि । यः अबलावेणिमोक्षोत्सुकानि पथि श्राम्यताम् प्रोषितानाम् वृन्दानि मन्द्रस्निग्धैः ध्वनिभिः त्वरयति ॥ ३८ ॥

**भर्तुरिति** ॥ विधवा गतभर्तृका न भवतीत्यविधवा सभर्तृका । हे अविधवे । अनेन भर्तृजीवनसूचनादनिष्टाशङ्कां वारयति । मां भर्तुस्तव पत्युः प्रियं मित्रं प्रियसुहृदम् । तत्रापि हृदयनिहितैर्मनसि स्थापितैस्तत्संदेशैस्तस्य भर्तुः संदेशैस्तत्समीपमागतम् । भर्तुः संदेशकथनार्थमागतमित्यर्थः । अम्बुवाहं मेघं विद्धि जानीहि ॥ न केवलमहं वार्ताहरः किंतु घटकोऽपीत्याशयेनाह । योऽम्बुवाहो मेघो मन्द्रस्निग्धैः स्निग्धगम्भीरैर्ध्वनिभिर्गर्जितैः करणैः अबलानां स्त्रीणां वेणयस्तासां मोक्षे मोचन उत्सुकानि पथि श्राम्यतां श्रान्तिमापन्नानां प्रोषितानां प्रवासिनाम् । पान्थानामित्यर्थः । वृन्दानि सङ्घांस्त्वरयति । पान्थोपकारिणो मे किमु वक्तव्यं सुहृदुपकारित्वमिति भावः ॥ ३८ ॥

**अन्वयार्थः**-हे सौभाग्यवति ! मुझे अपने स्वामीके प्रियसखा हृदयमें धारण किये उसके संदेशोंकरके अपने समीप आयाहुआ मेघ जान, जो अपनी स्त्रियोंकी वेणी खोलनेमें उत्सुक मार्गमे थकेहुए पथिक-समूहोंको मनोहर गम्भीर गर्जनाओंकरके शीघ्रता कराता है ॥ ३८ ॥

**भावार्थः**—हे सधवे ! हमको तुम अपने स्वामीका प्रियतम मित्र जानो; हम मेघ तुह्मारे पतिका सन्देशवचन हृदयमें धारण कर तुह्मारे निकट आये हैं, परदेशको गमहुम जो पुरुष गया विदेशमें निश्चिन्त होकर ठिकेरहते है, हम अपने गम्भीर और कर्ण-प्रिय शब्दसे उनको अपनी प्यारीकी वेणीका संहार करनेके लिये शीघ्रता कराते हैं ॥ ३८ ॥

भर्तृसख्यादिज्ञापनस्य फलमाह—

इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य संभाव्य चैव ।
श्रोष्यत्यस्मात्परमवहिता सौम्य सीमन्तिनीनां
कान्तोदन्तः सुहृदुपनतः संगमात्किंचिदूनः ॥ ३९ ॥

अन्वयः—इति आख्याते पवनतनयम् मैथिली इव सा उन्मुखी उत्कंठोच्छ्वसितहृदया त्वाम् वीक्ष्य संभाव्य च अस्मात् परम् अवहिता श्रोष्यति एव। हे सौम्य! सीमन्तिनीनाम् सुहृदुपगतः कान्तोदन्तः सङ्गमात्, किंचित् ऊनः [ भवति ] ॥ ३९ ॥

इतीति ॥ इत्येवमाख्याते सति पवनतनयं हनूमन्तं मैथिलीव सीतेव सा मत्प्रिया। उन्मुख्युत्कण्ठयौत्सुक्येनोच्छ्वसितहृदया विकसितचित्ता सती त्वां वीक्ष्य संभाव्य सत्कृत्य च। अस्माद्भर्तृमैत्रीज्ञापनात्परं सर्वं श्रोतव्यम्। अवहिताप्रमत्ता सती श्रोष्यत्येव ॥ अत्र सीताहनूमदुपाख्यानादस्याः पातिव्रत्यं मेघस्य दूतगुणसंपत्तिश्च व्यज्यते। तद्गुणास्तु रसाकरे—"ब्रह्मचारी बली धीरो मायावी मानवर्जितः। धीमानुदारो निःशङ्को वक्ता दूतः स्त्रियां भवेत् ॥" इति ॥ ननु वार्तामात्रश्रवणादस्याः को लाभ इत्याशङ्क्यार्थान्तरमुपन्यस्यति—हे सौम्य साधो, सीमन्तिनीनां वधूनाम् ॥ "नारी सीमन्तिनी वधूः" इत्यमरः ॥ सुहृदा सुहृन्मुखेनोपनतः प्राप्तः सन्। सुहृत्पदं विप्रलम्भशङ्कानिवारणार्थम्। कान्तस्योदन्तो वार्ता कान्तोदन्तः ॥ "वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः ॥ संगमात्कान्तसंपर्कात्किंचिदून ईषदूनस्तद्वदेवानन्दकारीत्यर्थः ॥ ३९ ॥

अन्वयार्थः—ऐसा कहनेपर महावीरको जानकीकी समान वह ऊपरको मुख उठाकर, उत्कण्ठासे स्वांस लेतीहुई तुझे देख, और सत्कारकर इससे आगे सावधान होकर सुनेगी। हे सौम्य! स्त्रियोंको सुहृदद्वारा प्राप्त किया संदेशा स्वामीके संगमसे कुछही कम ( आनन्द करनेहारा ) होता है ॥ ३९ ॥

भावार्थः—हे सौम्य! तुह्मारे इतना कहनेपरः—सीताजी हनुमानजीको अपने पतिका विश्वासी दूतमान उनका भाषण श्रवण करनेके विषयमें जैसी उत्कंठित हुईथीं, वैसेही हमारी प्रियाका अन्तःकरण उत्कंठासे प्रफुल्ल होजानेपर, वह मुख ऊंचा कर तुमको देख हमारा मित्र मानेगी। और इसमें कुछ संशय नहीं कि वह सावधान चित्तसे तुमसे आगेका सब वृत्तान्त सुनेगी। कारण कि सु-

त्पन्नकरके लाएहुए, प्रियजनका संवाद स्त्रियोंके लिये प्रत्यक्ष पतिसमागमसे कुछ कम आनन्दका देनेवाला नहीं होता ॥ ३९ ॥

सम्प्रति संदिशति—

तामायुष्मन्मम च वचनादात्मनश्चोपकर्तुं
ब्रूयादेवं तव सहचरो रामगिर्याश्रमस्थः।
अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः
पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥ ४० ॥

**अन्वयः**—हे आयुष्मन्! मम वचनात् च आत्मनः उपकर्तुम् ताम् एवम् ब्रूयाः हे अबले! तव सहचरः रामगिर्याश्रमस्थः अव्यापन्नः वियुक्तः त्वाम् कुशलम् पृच्छति [तथाहि] सुलभविपदाम् प्राणिनाम् एतत् एव पूर्वाभाष्यम् [भवति] ॥ ४० ॥

**तामिति**। हे आयुष्मन् ॥ प्रशंसायां मतुप् ॥ परोपकारश्लाघ्यजीवितेत्यर्थः। मम वचनं प्रार्थनावचनं तस्माच्चात्मनः स्वस्योपकर्तुं च। परोपकारेणात्मानं कृतार्थयितुमित्यर्थः ॥ उपकारक्रियां प्रति कर्मत्वेऽपि तस्यापकरोतीत्यादिवत्संबन्धमात्रविवक्षायामात्मन इति षष्ठी न विरुध्यते। यथाह भारविः—"सा लक्ष्मीरुपकुरुते यया परेषाम्" इति। तथा श्रीहर्षश्च—"साधूनामुपकर्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम्। न कुतूहलिकस्य मनश्चरितं च महात्मनां श्रोतुम् ॥" इति। तथा च "क्वचित्क्वचिद्द्वितीयादर्शनात्सर्वस्य तथा" इति नाथवचनमनाथवचनमेव ॥ तां प्रियामेवं ब्रूयात्। भवानिति शेषः ॥ किमित्याह—हे अबले, तव सहचरो भर्ता रामगिरेश्चित्रकूटस्याश्रमेषु तिष्ठतीति रामगिर्याश्रमस्थः सन्नव्यापन्नः। न मृत इत्यर्थः। अमरणे हेतुमाह—वियुक्तो वियोगं प्राप्तो दुःखी संस्त्वां कुशलं पृच्छति ॥ दुह्यादित्वात्पृच्छतेर्द्विकर्मकत्वम् ॥ तथाहि। सुलभविपदामयत्नसिद्धविपत्तीनां प्राणिनामेतदेव कुशलमेव पूर्वभाष्यमेतदेव प्रथममवश्यं प्रष्टव्यम् ॥ "कृत्याश्च" इत्यावश्यकार्थे ण्यत्प्रत्ययः ॥ ४० ॥

**अन्वयार्थः**—हे आयुष्मन्! मेरे वचनसे और अपने उपकार करनेको उससे इस प्रकार कहना कि हे बाले! तेरा स्वामी चित्रकूटमें स्थित जीवित जीवन धारे वियोगकूं प्राप्त हुआ तुझसे

कुशल पूछता है ( कारण कि ) स्वयम् आई विपत्तिवाले प्राणियों-का यही प्रथम भाषण होता है ॥ ४० ॥

भावार्थः—हे आयुष्मन्! हमारे प्रार्थना किये वचनोंके अनु-सार तुम परोपकार साधन करके अपनेको कृतार्थ करनेके लिये उस प्यारीसे इस प्रकार कहना कि " हे अबले ! तुम्हारे प्यारे पति जीवित हैं, वह इस समय रामगिरिनामक पर्वतपर आश्रम बनाय-कर रहते हैं । अब वह तुम्हारे वियोगसे अत्यन्त कातर हो; तुह्मारी कुशल पूछते हैं जिन प्राणियोंको पगपग पर विपदकी सम्भा-वना है, उनकी कुशलका पूछनाही सबसे आगे उचित है ॥ ४० ॥

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं
सास्रेणाश्रुद्रुतमविरतोत्कण्ठमुत्कण्ठितेन ।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
संकल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥४१॥

अन्वयः–[ किंच ] दूरवर्ती वैरिणा विधिना रुद्धमार्गः सः तनुना गाढतप्तेन सास्रेण उत्कण्ठितेन समधिकतरोच्छ्वासिना अङ्गेन प्रतनु तप्तम् अश्रुद्रुतम् अविरतोत्कण्ठम् उष्णोच्छ्वासम् अ-ङ्गम् तैः सङ्कल्पैः विशति ॥ ४१ ॥

अङ्गेनेति ॥ किं च । दूरवर्ती दूरस्थः । न चागन्तुं शक्यत इ-त्याह । वैरिणा विरोधिना विधिना दैवेन रुद्धमार्गः प्रतिबद्धवर्त्मा स ते सहचरः । तनुना कृशेन गाढतप्तेनात्यन्तसंतप्तेन सास्रेण साश्रुणा । उ-त्कण्ठा वेदना यस्य जातोत्कण्ठितस्तेनोत्कण्ठितेन ॥ "तदस्य संजात-म्–" इत्यादिनेतच्प्रत्ययः । उत्कण्ठतेर्वा कर्तरि क्तः ॥ समधिकतरम-धिकमुच्छ्वसितीति समधिकतरोच्छ्वासी तेन दीर्घनिःश्वासिनेत्यर्थः॥ ता-च्छील्ये णिनिः ॥ अङ्गेन स्वशरीरेण प्रतनु कृशं तप्तं वियोगदुःखेन संतप्तमश्रुद्रुतमश्रुक्लिन्नम् ॥ "अश्रु नेत्राम्बु रोदनं चास्रमस्रु च" इत्यमरः ॥ अविरतोत्कण्ठमविच्छिन्नवेदनमुष्णोच्छ्वासं तीव्रनिःश्वासम्॥ "तिग्मं तीव्रं खरं तीक्ष्णं चण्डमुष्णं समं स्मृतम्" इति हलायुधः ॥

अङ्गं त्वदीयं शरीरं तैः स्वसंवेद्यैः संकल्पैर्मनोरथैर्विशति । एकीभवतीत्यर्थः ॥ अत्र समरागित्वद्योतनाय नायकेन नायिकायाः समानावस्थत्वमुक्तम् ॥ ४१ ॥

**अन्वयार्थः**–किन्तु, दूरस्थित विरोधी प्रारब्धसे प्रतिहत–मार्गवाला वह तेरा भर्ता कृश, अत्यन्त तपे आंसू तथा उत्कंठासे अधिकतर स्वांसवाले अंगकरके कृश, वियोग दुःखके आंसुओंसे दुःखी निरन्तर वेदनासे तप्तस्वासवाले तेरे शरीरमें उन अपने मनोरथोंसे प्रवेश करता है ॥ ४१ ॥

**भावार्थः**—दूरदेशमें पड़ाहुआ, व तुह्मारेपास जानेका मार्ग दुर्दैवरूपी शत्रुनें रोकरक्खा है, ऐसा वह तुह्मारा सहचर स्वानुभूत दुःखावस्थाकी तुह्मारे ऊपरभी कल्पना करता है; वह इस प्रकार कि जैसा उसका शरीर विरहसे क्लेशित व अत्यन्त सन्तापित होता है, वैसेही तुमभी वियोग दुःखसे जलकर कामज्वरसे जलती हो, जैसे वारंवार उसके नेत्रोंमें पानी आता है, व तुमको भेटनेकी बड़ी उत्कण्ठा होती है, वैसेही तुमभी सदा सर्वकाल दुःखके आंसुओंसे नहाकर भेटनेको बहुत आतुर होगी, विरहके उत्पन्न हुए दुःखसे जिस प्रकार वह बड़े २ स्वास लेता है, वैसेही तुह्मेंभी दीर्घ निश्वासता तीव्र होती जाती है ॥ ४१ ॥

संप्रति स्वावस्थानिवेदनाय प्रस्तौति—

शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्ता-
त्कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ।
सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृश्य-
स्त्वामुत्कण्ठाविरचितपदं मन्मुखेनेदमाह ॥ ४२ ॥

**अन्वयः**—हे अबले ! सखीनाम् पुरस्तात् आननस्पर्शलोभात् शब्दाख्येयम् यत् [ वचनम् ] अपि कर्णे कथयितुम् लोलः अभूत् किल श्रवणविषयम् अतिक्रान्तः [ तथा ] लोचनाभ्याम् अदृश्यः सः ते प्रियः त्वाम् उत्कण्ठाविरचितपदम् इदम् मन्मुखेन आह ॥ ४२ ॥

शब्दाख्येयमिति ॥ हे अबले, यस्ते प्रियः सखीनां पुरस्तादथ आननस्पर्शे त्वन्मुखसंपर्के लोभाद्गार्ध्यात् । अधरपानलोभादित्यर्थः । शब्दाख्येयं शब्देन स्वेणाख्येयमुच्चैर्वाच्यमपि यत्तत् । वचनमपीति शेषः । कर्णे कथयितुं लोलो लालसोऽभूत्किल ॥ "लोलुपो लोलुभो लोलो लालसो लम्पटोऽपि च" इति यादवः ॥ श्रवणविषयं कर्णपथमतिक्रान्तः । तथा लोचनाभ्यामदृष्टः । अतिदूरत्वाद्द्रष्टुं श्रोतुं च न शक्य इति भावः । स ते प्रियः । त्वामुत्कण्ठया विरचितानि पदानि सुप्तिङन्तशब्दा वाक्यानि वा यस्य तत्तथोक्तम् ॥ "पदं शब्दे च वाक्ये च" इति विश्वः ॥ इदं वक्ष्यमाणं "श्यामास्वङ्गम्" इत्यादिकं मन्मुखेनाह । मन्मुखेन स एव ब्रूत इत्यर्थः ॥ ४२ ॥

**अन्वयार्थः**—हे अबले! सखियोंके आगे मुखस्पर्शके लोभसे कहनेयोग्य जिस वचनकूभी कानमें कहनेकू इच्छावाला हुआ अब निश्चय कानोंके विषयसे पृथक् और नेत्रोंसे अदृश्य वह तेरा प्रिय भर्ता तुझे उत्कंठासे रचे इन पदोंकों मेरेद्वारा कहता है ॥४२॥

**भावार्थः**—हे अबले! तुह्मारे प्यारे स्वामी पहले सखियोंके सामने मुखकमल स्पर्श करनेके लोभसे, सबके सन्मुख ऊंचे शब्दसे कहने योग्य बातभी कानमें कहनेकी लालसा करते थे, उन्होंने इस समय तुम्हें श्रवणपथ और दर्शनपथके अतीत जान; अत्यन्त उत्कण्ठित हो हमारे मुखसे इन कातर वचनोंको कहला भेजा है ॥ ४२ ॥

सादृश्यप्रतिकृतिस्वप्नदर्शनतदङ्गस्पृष्टस्पर्शाख्यानि चत्वारि विरहिणां विनोदस्थानानि । तथा चोक्तं गुणपताकायाम्—"वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म स्वपनसमये दर्शनमपि । तदङ्गस्पृष्टानामुपनतवतां दर्शनमपि प्रतीकारोऽनङ्गव्यथितमनसां कोऽपि गदितः ॥" इति । तत्र सदृशवस्तुदर्शनमाह—

**श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं**
**वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।**
**उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासा-**
**न्हन्तैकस्मिन्क्वचिदपि न ते चण्डि सादृश्यमस्ति ४२**

**अन्वयः**—श्यामासु अङ्गम् चकितहरिणीप्रेक्षणे दृष्टिपातम् शशिनि वक्त्रच्छायाम् शिखिनाम् बर्हभारेषु केशान् [ तथा ] प्रतनुषु नदीवीचिषु भ्रूविलासान् उत्पश्यामि [ तथापि ] हन्त हे चंडि! क्वचिदपि एकस्मिन् वस्तुनि ते सादृश्यम् नास्ति ॥ ४३ ॥

**श्यामास्विति** ॥ श्यामासु प्रियङ्गुलतासु ॥ "श्यामा तु महिलाह्वया। लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली" इत्यमरः ॥ अङ्गं शरीरमुत्पश्यामि। सौकुमार्यादिसाम्यादङ्गमिति तर्कयामीत्यर्थः। तथा चकितहरिणीनां प्रेक्षणे ते दृष्टिपातं शशिनि चन्द्रे वक्त्रच्छाया मुखकान्तिम्। तथा शिखिनां बर्हिणां बर्हभारेषु बर्हसमूहेषु केशान्। प्रतनुषु स्वल्पासु नदीनां वीचिषु ॥ अत्र वीचीनां विशेषणोपादाने नानुक्तगुणग्रहो दोषः। भ्रूसाम्यनिर्वाहाय महत्त्वदोषनिराकरणार्थत्वात्तस्येति। तदुक्तं रसरत्नाकरे—"ध्वन्युत्पादे गुणोत्कर्षे भोगोक्तौ दोषवारणे। विशेषणादिदोषस्य नास्त्यनुक्तगुणग्रहः ॥" इति ॥ भ्रूविलासान् ॥ "भ्रूपताकाः" इति पाठे भ्रुवः पताका इवेत्युपमितसमासः ॥ उत्पश्यामीति सर्वत्र संबध्यते ॥ तथापि नास्ति मनोनिर्वृतिरित्याशयेनाह—हन्तेति ॥ हन्त विषादे ॥ "हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः" इत्यमरः ॥ हे चण्डि कोपने ॥ "चण्डस्त्वत्यन्तकोपनः" इत्यमरः। गौरादित्वात् ङीप् ॥ उपमानकथनमात्रेण न कोपितव्यमिति भावः। क्वचिदपि कस्मिन्नप्येकस्मिन्वस्तुनि ते तव सादृश्यं नास्ति। अतो न निर्वृणोमीत्यर्थः। अनेनास्याः सौन्दर्यमनुपममिति व्यज्यते ॥ ४३ ॥

**अन्वयार्थः**–प्रियंगुकी लताओंमें तेरा अंग चकितहरणियोंके अवलोकनमें तेरा दृष्टिपात, चन्द्रमामें मुखकी छाया मोरोंकी पुच्छोंसे वाल तथा स्वल्पनदियोंकी तरंगोंमें तेरे भ्रूविलासोंको देखताहूं तौभी हे चंडी! कहींभी एक वस्तुमें तेरा सादृश्य नहीं है ॥ ४३ ॥

**भावार्थः**—हे चण्डि! प्रियंगुलतामें तुह्मारे अंगकीसी सुकुमारता, चकित हरिणीके नेत्रमें तुह्मारी दृष्टिका सादृश्य, पूर्णचन्द्रमण्डलमें तुह्मारे मुखकी कान्ति, मोरोंकी पूंछमें तुह्मारे केशकलापकी समानता और सूक्ष्म नदियोंकी तरंगोंमें तुह्मारी भृकुटिचाल मैं देखताहूं, परन्तु ऐसी

कोई वस्तु नहीं है कि जिसमें तुम्हारी समस्त समानता इकट्ठी दिखाई दे ॥ ४३ ॥

संप्रति प्रतिकृतिदर्शनमाह—

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥ ४४ ॥

अन्वयः—[हे प्रिये] प्रणयकुपिताम् त्वाम् धातुरागैः शिलायाम् आलिख्य आत्मानम् ते चरणपतितम् कर्तुम् यावत् इच्छामि तावत् मुहुः उपचितैः अस्रैः मे दृष्टिः आलुप्यते क्रूरः कृतान्तः तस्मिन् चित्रे अपि नौ सङ्गमम् न सहते ॥ ४४ ॥

त्वामिति ॥ हे प्रिये, प्रणयेन प्रेमातिशयेन कुपितां कुपितावस्थायुक्तां त्वाम् । त्वत्प्रतिकृतिमित्यर्थः । धातवो गैरिकादयः ॥ "धातुर्वातादिशब्दादिगैरिकादिष्वजादिषु" इति यादवः ॥ त एव रागा रञ्जकद्रव्याणि ॥ "चित्रादिरञ्जकद्रव्ये लाक्षादौ प्रणयेच्छयोः । सारङ्गादौ च रागः स्यादारुण्ये रञ्जने पुमान्" इति शब्दार्णवे ॥ तैर्धातुरागैः । शिलायां शिलापट्ट आलिख्य निर्मायात्मानं माम् । मत्प्रतिकृतिमित्यर्थः । ते तव । चित्रगताया इत्यर्थः । चरणपतितं कर्तुं तथा लेखितुं यावदिच्छामि तावदिच्छासमकालं मुहुरुपचितैः प्रवृद्धैरस्रैरश्रुभिः कर्तृभिः ॥ "अस्रमश्रुणि शोणिते" इति विश्वः ॥ मे दृष्टिरालुप्यते । आव्रियत इत्यर्थः । ततो दृष्टिप्रतिबन्धनाल्लेखनं प्रतिबध्यत इति भावः । किंबहुना क्रूरो घातुकः ॥ "नृशंसो घातुकः क्रूरः" इत्यमरः ॥ कृतान्तो दैवम् ॥ "कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु" इत्यमरः ॥ तस्मिन्नपि चित्रेऽपि ॥ नावावयोः ॥ "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ" इति नावादेशः ॥ संगमं सहवासं न सहते । संगमलेखनमप्यावयोरसहमानं दैवमावयोः सङ्गं न सहत इति किमु वक्तव्यमित्यपिशब्दार्थः ॥ ४४ ॥

**अन्वयार्थः**—हे प्रिये! प्रेममें कुपित हुई तुझे धातुरंगोंसे शिलामें

लिखकर अपनेकूं तेरे चरणोंमें गिरानेवाला लिखनेको जबतक मैं इच्छा करताहूं तबतक वारंवार बढे आंसुओंसे मेरी दृष्टि रुक जाती है क्रूर काल उस चित्रमेंभीतो हमारा तेरा संगम नहीं सहता ॥ ४४ ॥

**भावार्थः**—हे प्रियतमे ! मैं गेरू अगंद रंगोंसे शिलाके ऊपर तुह्मारी प्रणयकुपित प्रति मूर्ति काढकर तुह्मारे चरणोंपर गिरीहुई अपनी तसबीर जिस समय काढने लगताहूं, उस समय महावेगसे निकलीहुई नेत्रजलकी धारासे मेरी दर्शनशक्ति एक पलमेंही लोप होजातीहै। दैवके क्रूरपने कहांतक कहूं कि हमारा दोनोंका समागम चित्रके बीचभी देख वह नहीं सहसका ॥ ४४ ॥

अधुना स्वप्नदर्शनमाह—

**मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-**
**र्लब्धायास्ते कथमपि मया स्वप्नसंदर्शनेषु ।**
**पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां**
**मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥ ४५ ॥**

**अन्वयः**—स्वप्नदर्शनेषु मया कथमपि लब्धायाः ते निर्दयाश्लेषहेतोः आकाशप्रणिहितभुजम् माम् पश्यन्तीनाम् स्थलीदेवतानाम् मुक्तास्थूलाः अश्रुलेशाः तरुकिसलयेषु बहुशः न पतन्ति इति न खलु ॥ ४५ ॥

**मामिति** ॥ सुप्तस्य विज्ञानं स्वप्नः ॥ "स्वप्नः सुप्तस्य विज्ञानम्" इति विश्वः ॥ संदर्शनं संवित् ॥ "दर्शनं समये शास्त्रे दृष्टौ स्वप्नेऽक्षिण संविदि" इति शब्दार्णवे ॥ स्वप्नसंदर्शनानि स्वप्नज्ञानानि ॥ चूतवृक्षादिवत्सामान्यविशेषभावेन सह प्रयोगः ॥ तेषु मया कथमपि महता प्रयत्नेन लब्धाया गृहीतायाः । दृष्टाया इति यावत् ॥ ते तव निर्दयाश्लेषो गाढालिङ्गनं स एव हेतुस्तस्य । निर्दयाश्लेषार्थमित्यर्थः ॥ "षष्ठी हेतुप्रयोगे" इति षष्ठी ॥ आकाशे निर्विषये प्रणिहितभुजं प्रसारितबाहुं मां पश्यन्तीनां स्थलीदेवतानां मुक्ता मौक्तिकानीव स्थूला अश्रुलेशा बाष्पबिन्दवस्तरुकिसलयेषु। अनेन चैलाञ्चलेनाश्रुधारणसमाविर्भव्यते। बहुशो न पतन्तीति न। किन्तु पतन्त्येवेत्यर्थः ॥ निश्चये नञ्द्व-

प्रयोगः । तथा चाधिकारसूत्रम्—"स्मृतिनिश्चयसिद्धार्थेषु नञ्द्वय-प्रयोगः सिद्धः" इति । महात्मगुरुदेवानामश्रुपातः क्षितौ यदि । देशभ्रंशो महद्दुःखं मरणं च भवेद्ध्रुवम् ॥" इति क्षितौ देवताश्रुपातनिषेधदर्शनाद्यक्षस्य मरणभावसूचनार्थं तरुकिसलयेषु पतन्तीत्युक्तम् ॥

अन्वयार्थः—स्वप्न देखनेमें मुझे किसीप्रकारसे प्राप्त हुए तेरे गाढ आलिंगनके कारण आकाशमें फैलाये भुजावाले मुझे देखतीहुई स्थलदेवियोंके मोतीकी समान बडी अश्रुखंड आंसुओंकी बूंदे वृक्षोंके पत्तोंमें वहुत नहीं गिरती हैं यह नहीं किन्तु बहुत गिरती हैं ॥४५॥

भावार्थः—हे प्रियतमे मैंने किसी समय स्वप्नावस्थामें तुमको किसी प्रकारसे पाय किचकिचाकर आलिंगन करनेके लिये हाथ पसारे हैं; मेरी ऐसी अवस्थाको देख वनदेवियोओंने अनेकवार वृक्षोंके कोमल पल्लवोंपर मोतीकी समान वडी २ आंसुओंकी बूंदे छोडी हैं । अर्थात् मेरी यह दशा देख वनदेवीभी रोती हैं ॥ ४५ ॥

इदानीं तदङ्गस्पृष्टवस्तुदर्शनमाह—

**भित्त्वा सद्यः किसलयपुटान्देवदारुद्रुमाणां**
**ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।**
**आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः**
**पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ ४६ ॥**

अन्वयः—देवदारुद्रुमाणाम् किसलयपुटान् सद्यः भित्त्वा तत्क्षीरस्रुतिसुरभयः ये तुषाराद्रिवाताः दक्षिणेन प्रवृत्ताः हे गुणवति ! पूर्वम् एभिः वातैः तव अङ्गम् स्पृष्टम् भवेत् यदि किल तर्हि मया आलिङ्ग्यन्ते ॥ ४६ ॥

भित्त्वेति ॥ देवदारुद्रुमाणां किसलयपुटान्पल्लवपुटान्सद्यो भित्त्वा । तत्क्षीरस्रुतिसुरभयस्तेषां देवदारुद्रुमाणां क्षीरस्रुतिभिः क्षीरनिष्यन्दैः सुरभयः सुगन्धयः । तुषाराद्रिजातत्वे लिङ्गमिदम् । ये वाता दक्षिणेन दक्षिणमार्गेण ॥ तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानात्तृतीया । समेन यातीतिवत् । तत्रापि करणत्वस्य प्रतीयमानत्वात् । "कर्तृकरणयोरेव तृतीया" इति भाष्यकारः ॥ प्रवृत्ताश्चलिताः । हे गुणवति

सौशील्यसौकुमार्यादिगुणसंपन्ने, ते तुषाराद्रिवाताः पूर्वं प्रागेभिर्वातैस्तवाङ्गं स्पृष्टं भवेद्यदि । किलेति संभावितमेतदिति बुद्ध्येत्यर्थः ॥ "वार्तासंभाव्ययोः किल" इत्यमरः ॥ मयालिङ्ग्यन्त आश्लिष्यन्ते ॥ अत्र वायूनां स्पृश्यत्वेऽप्यमूर्तत्वेनालिङ्गनायोगादालिङ्ग्यन्त इत्यभिधानम्। यक्षस्योन्मत्तत्वात्प्रलपितमित्यदोष इति वदन्निरुक्तकारः स्वयमेवोन्मत्तप्रलापीत्युपेक्षणीयः ॥ ४६ ॥

**अन्वयार्थः**–देवदारुवृक्षोंके पल्लवपुटोंको शीघ्र भेदकर उसके दुग्ध टपकनेकी सुगन्धिवाली जो हिमालयकी पवन दक्षिणकी ओर जानेको प्रवृत्त होती हैं हे गुणवति सुकुमारसुशीलादिगुणयुक्त प्रथम इन पवनोंकरके कदाचित् तेरा अंग छूआगया हो तौ ऐसी बुद्धिद्वारा मुझसे वे आलिगन कीजातीहैं ॥ ४६ ॥

**भावार्थः**—हे गुणवति! हिमालयपर्वतका समुदायवायु, देवदारुवृक्षोंके किसलयपुट भेदकरके, उसमेंके क्षीरसे सुगन्धित हो दक्षिणकी ओरको वहता है, वह यदि पहले तुह्मारे शरीरसे छू आयाहो, ऐसी आशा कर मैं आग्रहसहित उसका (पवन) आलिगन करताहूं ॥४६॥

**संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा**
**सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।**
**इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे**
**गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥४७॥**

**अन्वयः**—मया दीर्घयामा त्रियामा क्षणः इव कथम् संक्षिप्यते? अहः अपि सर्वावस्थासु मन्दमन्दातपम् कथम् स्यात्? हे चटुलनयने! इत्थम् दुर्लभप्रार्थनम् मे चेतः गाढोष्माभिः त्वद्वियोगव्यथाभिः अशरणम् कृतम् ॥ ४७ ॥

**संक्षिप्येतेति** ॥ दीर्घा यामाः प्रहरा यस्यां सा दीर्घयामा । विरहवेदनया तथा प्रतीयमानेत्यर्थः । त्रियामा रात्रिः ॥ "आद्यन्तयोरर्धयामयोर्दिनव्यवहारात्त्रियामा" इति क्षीरस्वामी ॥ क्षण इव कथं केन प्रकारेण संक्षिप्येत लघूक्रियेत । अहरपि सर्वावस्थासु । सर्वकालेष्वित्यर्थः । मन्दमन्दो मन्दप्रकारः ॥ "प्रकारे गुणवचनस्य" इति द्विरुक्तिः । "कर्मधारयवदुत्तरेषु" इति कर्मधारयवद्भावात्सुपो लुक् ॥

मन्दमन्दातपमत्यल्पसंतापं कथं स्यात् । न स्यादेव । हे चटुलनयने चञ्चलाक्षि! इत्थमनेन प्रकारेण दुर्लभप्रार्थनमप्राप्यमनोरथं मे मम चेतो गाढोष्माभिरतितीव्राभिस्त्वद्वियोगव्यथाभिरशरणमनाथं कृतम् ॥

अन्वयार्थः—मुझे दीर्घ पहरोंवाली रात्रि क्षणकीनाईं किस प्रकार कट जाय? दिवसभी सर्वथा मन्द उष्णतायुक्त किस प्रकार हो जाय? हे चंचलनेत्रवाली! ऐसी दुर्लभ प्रार्थनामें अपना चित्त मैने अत्यन्त संतापदायक तेरी वियोगव्यथाओंसे अनाथ कर-दिया ॥ ४७ ॥

भावार्थः—हे चंचलाक्षि! यह तीनपहरवाली लंबी रात कैसे क्षण कालकी समान छोटी होगी? और यह दिनभी किसप्रकारसे सब अवस्थामें स्वल्पसंतापकारी होंगे? इस प्रकारसे दुर्लभ प्रार्थना करता-हुआ मेरा चित्त अति तीव्र वियोगव्यथासे अत्यन्त अनाथ हो-गया ॥ ४७ ॥

न च मदीयदुर्दशाश्रवणाद्भेतव्यमित्याह—

नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे
तत्कल्याणि त्वमपि सुतरां मा गमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ४८ ॥

अन्वयः—ननु बहु विगणयन् आत्मानम् आत्मना एव अवलम्बे तत् हे कल्याणि! त्वम् अपि सुतराम् कातरत्वम् मा गमः कस्य अत्यन्तम् सुखम् उपनतम् वा एकान्ततः दुःखम् [ किन्तु ] चक्रनेमिक्रमेण नीचैः च उपरि गच्छति ॥ ४८ ॥

नन्विति ॥ नन्वित्यामन्त्रणे ॥ "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः ॥ ननु प्रिये बहु विगणयञ्शापान्ते सत्येवमेवं करिष्यामीत्यावर्तयन्नात्मानमात्मनैव स्वेनैव ॥ "प्रकृत्यादिभ्य उपसंख्यानम्" इति तृतीया ॥ अवलम्बे धारयामि । यथाकथंचिज्जीवामीत्यर्थः । तत्तस्मात्कारणात् । हे कल्याणि सुभगे, त्वत्सौभाग्येनैव जीवामीति भावः ॥ "बह्वादिभ्यश्च" इति ङीष् ॥ त्वमपि नितरामत्यन्तं

कातरत्वं भीरुत्वं मा गमः मा गच्छ ॥ "न माङ्योगे" इत्यडागमाभावः ॥ तादृक्सुखिनोरावयोरीदृशि दुःखे कथं न बिभेमीत्याशङ्क्याह—कस्येति ॥ कस्य जनस्यात्यन्तं नियतं सुखमुपनतं प्राप्तमेकान्ततो नियमेन दुःखं वोपनतम्। किं तु दशावस्था चक्रस्य रथाङ्गस्य नेमिस्तदन्तः ॥ "चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान्" इत्यमरः ॥ तस्याः क्रमेण परिपाट्या ॥ "क्रमः शक्तौ परिपाट्याम्" इति विश्वः ॥ नीचैरध उपरि च गच्छति प्रवर्तते। एवं जन्तोः सुखदुःखे पर्यावर्तेते इत्यर्थः ॥ ४८ ॥

**अन्वयार्थः**-अनेक विचार करके मैं कष्टसे अपने आत्माकूं आत्माहीसे धारण करताहुं, सो हे कल्याणि तूंभी अत्यन्त कातर मत होना, किस मनुष्यको अत्यन्त सुख प्राप्त हुआ है वा अत्यन्त दुःख, किन्तु ( यह ) पहियेकी नेमिक्रमसे नीचे और ऊपरको जाता है ॥ ४८ ॥

**भावार्थः**—हे कल्याणि! मै अनेक विचार करके बहुत कष्टसे अपनेको स्थिर करके रखता हूं, परन्तु तुमभी कहीं अत्यन्त कातर न होना। किसी पुरुषपर सदा सुख या दुख नहीं रहता; सबही अवस्था पहियेकी परिधिके समान एकवार नीचे और एकवार ऊपरको जाती है ॥ ४८ ॥

न च निरवधिकमेतद्दुःखमित्याह—

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेषान्मासान्गमय चतुरो लोचने मीलयित्वा।
पश्चादावां विरहगणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ ४९ ॥

**अन्वयः**—शार्ङ्गपाणौ भुजगशयनात् उत्थिते मे शापान्तः [ भविष्यति ] शेषान् चतुरः मासान् लोचने मीलयित्वा गमय पश्चात् आवाम् विरहगणितम् तम् तम् आत्माभिलाषम् परिणतशरच्चन्द्रिकासु क्षपासु निर्वेक्ष्यावः ॥ ४९ ॥

शापान्त इति ॥ पाणौ शार्ङ्गं यस्य स तस्मिञ्शार्ङ्गपाणौ विष्णौ ॥ "सप्तमीविशेषणे—" इत्यादिना बहुव्रीहिः । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" इति वक्तव्यात्पाणिशब्दस्योत्तरनिपातः ॥ भुजगः शेष एव शयनं तस्मादुत्थिते सति मे शापान्तः शापावसानम् । भविष्यतीति शेषः । शेषानवशिष्टांश्चतुरो मासान् । मेघदर्शनप्रभृति हरिबोधनदिनान्तमित्यर्थः । दशदिवसाधिक्यं त्वत्र न विवक्षितमित्युक्तमेव । लोचने मीलयित्वा निमील्य गमय । धैर्येणातिवाहयेत्यर्थः । पश्चादनन्तरं त्वं चाहं चावाम् ॥ "त्यदादीनि सर्वैर्नित्यम्" इत्येकशेषः ॥ "त्यदादीनां मिथो द्वन्द्वे यत्परं तच्छिष्यते" इत्यस्मदः शेषः ॥ विरहे गुणितमेवमेवं करिष्यामीति मनस्यावर्तितम् । तं तम् ॥ वीप्सायां द्विरुक्तिः ॥ आत्मनोरावयोरभिलाषं मनोरथम् । परिणताः शरच्चन्द्रिका यासां तासु क्षपासु रात्रिषु ॥ निर्वेक्ष्यावो भोक्ष्यावहे ॥ विशतेर्लृट् ॥ "निर्वेशो भृतिभोगयोः" इत्यमरः ॥ अत्र केश्चित् "नभोनभस्ययोरेव वार्षिकत्वात्कथमाषाढादिचतुष्टयस्य वार्षिकत्वमुक्तमिति चोदयित्वर्तुत्रयपक्षाश्रयणादविरोधः" इति पर्यहारि तत्सर्वमसंगतम् । अत्र गतशेषाश्चत्वारो मासा इत्युक्तं कविना न तु ते वार्षिका इति । तस्मादनुक्तोपालम्भ एव । यच्च नाथेनोक्तम् "कथमाषाढादिचतुष्टयात्परं शरत्कालः" इति, तत्राप्याकार्तिकसमाप्तेः शरत्कालानुवृत्तेः परिणतशरच्चन्द्रिकास्वित्युक्तम् । न तु तदैव शरत्प्रादुर्भाव उक्त इत्यविरोध एव ॥ ४९ ॥

**अन्वयार्थः**—विष्णुके शेषशय्यासे उठनेपर (कार्तिकान्तमें) मेरे शापका अन्त होगा । शेष रहे चार महीनोंकूं तूं आंख मीचकर गँवादे । पीछे हम दोनो वियोगमें विचारेहुए उन उन मनोरथोंकूं शरदचांदनीवाली रात्रियोंमें भोगेंगे ॥ ४९ ॥

**भावार्थः**—हे सुलोचने! शार्ङ्गपाणि ! विष्णुजी जब शेषशय्यासे उठेंगे, अर्थात् देव उठान एकादशीके दिन मेरे शापका अंत होगा । इस कारण तुम आंख मूंदकर जैसे बने वैसे इन शेष चार महीनोंको विताओ । इस शापके वीत जानेपर मैं शरच्चन्द्रसुशोभित रात्रिमें विरहकालके समय मनमें कियेहुए अपने सर्व मनोरथ इच्छानुसार भोगूंगा ॥ ४९ ॥

संप्रति तस्या मेघवञ्चकत्वशङ्कानिरासायातिगूढमभिधेयमुपदिशति—

**भूयश्चाहं त्वमपि शयने कण्ठलग्ना पुरा मे**
**निद्रां गत्वा किमपि रुदती सस्वरं विप्रबुद्धा।**
**सान्तर्हासं कथितमसकृत्पृच्छतश्च त्वया मे**
**दृष्टः स्वप्ने कितव रमयन्कामपि त्वं मयेति ॥ ५० ॥**

**अन्वयः**—भूयश्च आह पुरा शयने मे कण्ठलग्ना अपि त्वम् निद्राम् गत्वा किमपि सस्वरम् रुदती विप्रबुद्धा [आसीः] असकृत् पृच्छतः मे 'हे कितव त्वम् कामपि रमयन् मया स्वप्ने दृष्टः' इति त्वया सान्तर्हासम् कथितम् ॥ ५० ॥

**भूय इति** ॥ हे अबले, भूयः पुनरप्याह । त्वद्भर्ता मन्मुखेनेति शेषः। मेघवचनमेतत्। किमित्यत आह—पुरा पूर्वम्। पुराशब्दश्चिरातीते ॥ "स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा" इत्यमरः ॥ शयने मे कण्ठलग्नापि त्वम्। गले बद्धस्य कथमपि गमनं न संभवेदिति भावः। निद्रां गत्वा किमपि। केन वा निमित्तेनेत्यर्थः। सस्वनं सशब्दम्। उच्चैरित्यर्थः। रुदती सति विप्रबुद्धा। आसीरिति शेषः । असकृद्बहुशः पृच्छतः। रोदनहेतुमिति शेषः । मे मम। हे कितव, त्वं कामपि रमयन्मया स्वप्ने दृष्ट इति त्वया सान्तर्हासं समन्दहासं यथा तथा कथितं चेति। त्वद्भर्ता भूयश्चाहेति योजना ॥ ५० ॥

**अन्वयार्थः**—फिर औरभी कहा है। प्रथम शयनसमयमें मेरे कंठमें लगीहुईभी तूं निद्राको प्राप्त होकर कुछेक शब्दसहित रोकर जाग उठीथी, वारंवार पूछनेपर मेरे "हे धूर्त ! तूं किसीके संग रमण करताहुआ मैने स्वप्नमें देखा है" ऐसा तैंने मन्दहासपूर्वक कहाथा ५०.

**भावार्थः**—हे सखे ! अपनी सखिसे फिर निशानीकी भांति तुम यह कहना, कि तुह्मारे पतिनें कहा है, कि "एकदिन तुम हमारे कंठसे चिपटीहुई सोरहीथी, कि इतनेमें अचानक शब्दकर और रोतीहुई तुम जागपडीथीं। फिर मैंने बारम्बार तुमसे रोनेका कारण पूछा तब तुमनें मन्द हंसकर कहाथा 'अरे धूर्त ! तुझे किसीके संग रमण करताहुआ मैने स्वप्नमें देखा है" ॥ ५० ॥

एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा
मा कौलीनाच्चकितनयने मय्यविश्वासिनी भूः।
स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ५१ ॥

अन्वयः—हे चकितनयने ! एतस्मात् अभिज्ञानदानात् माम् कुशलिनम् विदित्वा कौलीनात् मयि अविश्वासिनी माभूः किमपि स्नेहान् विरहे ध्वंसिनः आहुः [ किंतु ] ते अभोगात् इष्टे वस्तुनि उपचितरसाः प्रेमराशीभवन्ति ॥ ५१ ॥

एतस्मादिति ॥ एतस्मात्पूर्वोक्तात् । अभिज्ञायतेऽनेनेत्यभिज्ञानं लक्षणं तस्य दानात्प्रापणान्मां कुशलिनं क्षेमवन्तं विदित्वा ज्ञात्वा । हे चकितनयने, कुले जनसमूहे भवात्कौलीनाल्लोकप्रवादात् । एतावता कालेन परासुर्नोचेदागच्छतीति जनप्रवादादित्यर्थः ॥ "स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम्" इत्यमरः ॥ मयि विषयेऽविश्वासिनी मरणशङ्किनी मा भूर्न भव ॥ भवतेर्लुङ् । "न माङ्योगे" इत्यडागमप्रतिषेधः ॥ न च दीर्घकालविप्रकर्षात्पूर्वस्नेहनिवृत्तिराशङ्क्येत्याह—स्नेहानिति ॥ किमपि किंचिन्निमित्तम् । न विद्यत इति शेषः । स्नेहान्प्रीतीर्विरहे सत्यन्योन्यविप्रकर्षे सति ध्वंसिनो विनश्वरानाहुः । तत्तथा न भवतीत्यभिप्रायः । किंतु ते स्नेहा अभोगाद्विरहे भोगाभावाद्धेतोः ॥ प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते ॥ इष्टे वस्तुनि विषये । उपचितो रसः स्वादो येषु त उपचितरसाः सन्तः । प्रवृद्धतृष्णा इत्यर्थः ॥ "रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः" इति विश्वः ॥ प्रेमराशीभवन्ति । वियोगासहिष्णुत्वमापद्यन्त इत्यर्थः ॥ स्नेहप्रेम्णोरवस्थाभेदाद्भेदः । तदुक्तम्—"आलोकनाभिलाषौ रागस्नेहौ ततः प्रेमा । रतिशृङ्गारौ योगे वियोगता विप्रलम्भश्च" ॥ इति । तदेव स्फुटीकृतं रसाकरे—"प्रेमादिदृक्षारम्येषु तच्चिन्ता त्वभिलाषकः । रागस्तत्सङ्गबुद्धिः स्यात्स्नेहस्तत्प्रवणक्रिया ॥ तद्वियोगासहं प्रेम रतिस्तत्सहवर्तनम् । शृङ्गारस्तत्समः क्रीडा संयोगः सप्तधा क्रमात् ॥" इति ॥ ५१ ॥

**अन्वयार्थः**—हे चंचलनेत्रवाली ! इस चिह्नसे मुझे कुशल जान-

कर जनप्रवादसे मेरी कुशलमें शंका मत करना। किसी निमित्तसे स्नेहोंको वियोगमें विनश्वर कहते हैं। इच्छित विषयोंके उपभोगकी प्राप्ति न होनेसे इष्ट वस्तुके प्राप्त विषयमें अति उत्सुक होताहुआ प्रेमकी राशि बनता है ॥ ५१ ॥

**भावार्थः**—हे चकितनयने ? इस अभिज्ञान वचनसे जानना कि मैं कुशलसहित हूं। लोकापवादसे मेरे जीवन—तुम कुछ शंका न करना। बहुत दिन बिछुरे रहेनेसे स्नेह दूर हो जाता है, ऐसाभी मनमें न समझलेना। वरन मेरे मतसे तो उलटा होता है, कि वह स्नेह वियोगकालमें इच्छित विषयोंके उपभोगका अभाव होनेसे इष्ट वस्तुके प्राप्त विषयमें अति उत्सुक होताहुआ प्रेमकी राशि बनता है।५१

इत्थं स्वकुशलं संदिश्य तत्कुशलसंदेशानयनमिदानीं याचते—

**आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते**
**शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः ।**
**साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि**
**प्रातः कुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥ ५२ ॥**

**अन्वयः**—प्रथमविरहोदग्रशोकाम् सखीम् एवम् आश्वास्य त्रिनयनवृषोत्खातकूटात् शैलात् आशु निवृत्तः साभिज्ञानप्रहितकुशलैः त्वद्वचोभिः मम अपि प्रातः कुन्दप्रसवशिथिलम् जीवितम् धारयेथाः ॥ ५२ ॥

**आश्वास्येति** ॥ प्रथमविरहेणोदग्रशोकां तीव्रदुःखां ते सखीमेवं पूर्वोक्तरीत्याश्वास्योपजीव्य त्रिनयनस्य त्र्यम्बकस्य वृषेण वृषभेणोत्खाता अवदारिताः कूटाः शिखराणि यस्य तस्मात् ॥ "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः ॥ शैलात्कैलासादाशु निवृत्तः सन्प्रत्यावृत्तः सन्साभिज्ञानं सलक्षणं यथातथा प्रहितं प्रेषितं कुशलं येषु तैस्तस्यास्त्वत्सख्या वचोभिर्ममापि प्रातःकुन्दप्रसवमिव शिथिलं दुर्बलं जीवितं धारयेथाः स्थापय ॥ प्रार्थनायां लिङ् ॥ ५२ ॥

**अन्वयार्थः**-प्रथम वियोगमें तीव्र शोकयुक्त सखीको इस प्रकार समझाकर शिवके वृषभसे विदीर्ण शृङ्गवाले, उस पर्वतसे शीघ्र

लौटकर, लक्षणसहित भेजेहुए कुशलयुक्त अपनी सखीके वचनोंकरके भरेगी प्रातःकाल चमेलीके फूलकी समान शिथिल हुए जीवनकूं स्थापन कर ॥ ५२ ॥

भावार्थः—प्रथम विरहसे अत्यन्त शोकाकुल हुई अपनी सखीको इस प्रकारसे समाधान कर, महादेवजीके नन्दीने जिसके शिखरोंको विदारण किया है, ऐसे कैलासपर्वतसे शीघ्र लौटकर हमारी उस प्यारीकी अभिज्ञानसहित वार्ताद्वारा प्रभातकालीन कुन्दके फूलकी समान शिथिल हुए मेरे जीवनकी जिससे रक्षा होवे वह तुम करना ॥ ५२ ॥

संप्रति मेघस्य प्रार्थनाङ्गीकारं प्रश्नपूर्वकं कल्पयति—

कच्चित्सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्न खलु भवतो धीरतां तर्कयामि।
निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव॥ ५३ ॥

अन्वयः—हे सौम्य त्वया मे इदम् बन्धुकृत्यम् व्यवसितम् कच्चित् प्रत्यादेशात् भवतः धीरताम् न तर्कयामि खलु याचितः-निःशब्दः अपि त्वम् चातकेभ्यः जलम् प्रदिशसि हि सताम् प्रणयिषु ईप्सितार्थक्रिया एव प्रत्युक्तम् ॥ ५३ ॥

कच्चिदिति ॥ हे सौम्य साधो, इदं मे बन्धुकृत्यं बन्धुकार्यम् ॥ देवदत्तस्य गुरुकुलमितिवत्प्रयोगः ॥ व्यवसितं कच्चित्करिष्यामीति निश्चितं किम् ॥ "कच्चित्कामप्रवेदने" इत्यमरः ॥ अभिप्रायज्ञापनं कामप्रवेदनम् ॥ न च ते तूष्णींभावादनङ्गीकारं शङ्के। यतस्ते स एवोचित इत्याह—"प्रत्यादेशात्करिष्यामि" इति प्रतिवचनात् ॥ "उक्तिराभाषणं वाक्यमादेशो वचनं वचः" इतिशब्दार्णवे ॥ भवतस्तव धीरतां गम्भीरत्वं न कल्पयामि न समर्थये खलु। तर्हि कथमङ्गीकारज्ञानं तत्राह—याचितः सन्निःशब्दोऽपि निर्गर्जितोऽपि। अप्रतिजानानोऽपीत्यर्थः। चातकेभ्यो जलं प्रदिशसि ददासि। युक्तं चैतदित्याह—हि यस्मात्सतां सत्पुरुषाणां प्रणयिषु याचकेषु विषय ईप्सि-

तार्थक्रियैवापेक्षितार्थसंपादनमेव प्रत्युक्तं प्रतिवचनम्। क्रिया केवलमुत्तरमित्यर्थः ॥ "गर्जति शरदि न वर्षति वर्षति वर्षासु निःस्वनो मेघः। नीचो वदति न कुरुते न वदति सुजनः करोत्येव॥" इति भावः॥

**अन्वयार्थः**—हे सौम्य! तैने मेरा यह बन्धुकार्य करना निश्चय किया है क्या! करूंगा इस प्रतिवचनसेही तेरी धीरताकूं नहीं समर्थन करता हूं। याचना कियाहुआ निश्शब्दभी तूं चातकोंको जल देता है, कारण कि सत्पुरुषोंका याचकोंमें इच्छित अर्थ संपादन करनाही केवल उत्तर है ॥ ५३ ॥

**भावार्थः**—हे सौम्य! इस बन्धुके कार्यको सिद्ध करनेके लिये तुम कृत-निश्चय हुए हो। तुम्हारे मौन धारण करनेपरभी ऐसी शंका नहीं होती, कि तुम अस्वीकार करते हो। यदि तुम मित्रका कार्य करना मुखसे अंगीकार करो, तो तुम्हारी गंभीरता नहीं रहती। कारण कि जब चातकगण तुम्हारे निकट जलकी प्रार्थना करते हैं, तब तुम एक वचनभी न कहकर जल देदिया करते हो। प्रसिद्धभी है कि साधुगण प्रार्थितकार्य साधनेके द्वाराही प्रेमीजनके निकट प्रार्थनावाक्यका उत्तर दिया करते हैं ॥ ५३ ॥

संप्रति स्वापराधसमाधानपूर्वकं स्वकार्यस्यावश्यंकरणं प्रार्थयमानो मेघं विसृजति—

**एतत्कृत्वा प्रियमनुचितप्रार्थनावर्तिनो मे**
**सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या।**
**इष्टान्देशाञ्जलद विचर प्रावृषा संभृतश्री-**
**र्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥ ५४ ॥**

**अन्वयः**—हे जलद सौहार्दात् वा विधुरः इति वा मयि अनुक्रोशबुद्ध्या अनुचितप्रार्थनावर्तिनः अपि मे प्रियम् एतत् कृत्वा प्रावृषासम्भृतश्रीः॥इष्टान् देशान् विचर एवम् क्षणमपि च ते विद्युता विप्रयोगः मा भूत् ॥ ५४ ॥

**एतदिति** ॥ हे जलद, सौहार्दात्सुहृद्भावात् ॥ "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः ॥ विधुरो वियुक्त इति हेतोर्वा ॥

"विधुरं तु प्रविश्लेषे" इत्यमरः ॥ मयि विषयेऽनुक्रोशबुद्ध्या क-रुणाबुद्ध्या वा । अनुचिता तवाननुरूपा या प्रार्थना प्रियां प्रति "सं-देशं मे हर" इत्येवंरूपा तत्र वर्तिनो निर्बन्धात्परस्य मे ममैतत्संदेश-हरणरूपं प्रियं कृत्वा संपाद्य प्रावृषा वर्षाभिः ॥ "स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः" इत्यमरः ॥ संभृतश्रीरुपचितशोभः सन् । इ-ष्टान्स्वाभिलषितान्देशान्विचर । यथेष्टदेशेषु विहरेत्यर्थः ॥ "देश-कालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्" इति वचनात्कर्मत्वम् ॥ एवं मद्वत्क्षणमपि स्वल्पकालमपि ते तव विद्युता । कलत्रेणेति शेषः॥ विप्रयोगो विरहो मा भून्मास्तु ॥ माङित्याशिषि लुङ् ॥ "अन्ते काव्यस्य नित्यत्वात्कुर्यादाशिषमुत्तमाम् । सर्वत्र व्याप्यते विद्वान्नाय-केच्छानुरूपिणीम् ॥" इति सारस्वतालंकारे दर्शनात्काव्यान्ते नायके-च्छानुरूपोऽयमाशीर्वादः प्रयुक्त इत्यनुसंधेयम् ॥ ५४ ॥

इति श्रीमहोपाध्यायमल्लिनाथसूरिविरचितया संजीविनीसमा-
ख्यया व्याख्यया समेतो महाकविश्रीकालिदासवि-
रचिते मेघदूते काव्ये उत्तरमेघः समाप्तः ।

**अन्वयार्थः**-हे जलद! सुहृद्भावसे युक्त अथवा मेरेमें करुणा-बुद्धिसे अनुचितप्रार्थना करनेवाले मेरा यह प्रिय (कार्य) करके वर्षाद्वारा वृद्ध शोभावाला तूं इष्टदेशोंमें विचरण कर । इसप्रकार एक क्षणकोभी तेरी बिजलीसे वियोग न होओ ॥ ५४ ॥

**भावार्थः**—हे जलद! मैं तुह्मारे निकट यद्यपि अनुचित प्रार्थना करताहूं, तथापि तुम हमारी मित्रताके वशमें हो, अथवा अति कातर होनेके कारणसे हो, वा मेरे प्रति दया करके हो, उस कार्यके सिद्ध करने पश्चात् वर्षाकालमें शोभासम्पन्न हो इष्ट देशोंमें विचरण करना, मेरी समान, प्रिय विद्युल्लतासे तुह्मारा कभी क्षणमात्रकोभी वियोग न होवे ॥ ५४ ॥

इति श्रीमहाकविकालिदासविरचितं मेघसन्देशाभिधं खण्ड-
काव्यं मिश्रकुलाग्रगण्यसुखानंदसुतबलदेवप्रसादशर्म-
णा विरचितया ज्ञानदीपिकया हिन्दीयभाषया
टीकया सनाथं समाप्तिमगमत् ।